॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला

२८५

म० म० श्रीहरिहरकृतं

# प्रभा M M HA रिणयम्

'प्रकाश' हिन्
akāśa' Hindi Commentary

व्याख्या By
ACANDRA MIŚRA
आचार्य श्रीरामच
t College, Patna
( प्राध्यापक · राजकीय संस्कृत



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी OFFICE

१९६६

THE
HARIDAS SANSKRIT SERIES
285

# PRABHĀVATĪPARIṆAYA

OF

M M HARIHARA

*Edited with the 'Prakāśa' Hindi Commentary*

By

ĀCĀRYA ŚRĪ RĀMACANDRA MIŚRA

*Professor, Govt Sanskrit College, Patna*

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1969

# प्राक्कथन

## नाटक साहित्य की प्राचीनता

भारतीय नाटक साहित्य विचारधारा तथा विकासक्रम में मूलतः स्वतन्त्र है, इस बात को अब सभी आलोचक मानने लग गये हैं। वैदिक साहित्य की समीक्षा से पता चलता है कि वैदिककाल में नाटक के सभी अङ्गों—संवाद, सङ्गीत, नृत्य एवं अभिनयकला का किसी न किसी रूप में अस्तित्व था। ऋग्वेद में यम यमी, उर्वशी पुरूरवा और सरमा पणि के संवादात्मक सूक्तों में नाटकीय संवाद का तत्त्व वर्तमान है। सामवेद की सङ्गीतप्राणता अतिप्रसिद्ध है। आलोचकों का अनुमान है कि ऐसे संवाद ही कालान्तर में परिमार्जित होकर नाटकों के रूप में परिणत हुए। रामायण, महाभारतकाल में नाटक का कुछ और स्पष्ट उल्लेख पाया जाता है। विराट् पर्व में रङ्गशाला का स्पष्ट उल्लेख हुआ है। नट शब्द का भी वहाँ प्रयोग किया गया है, जिसका अर्थ श्रीधरस्वामी ने 'नवरसाभिनयचतुर' किया है। हरिवंश में रामायण की कथा पर आधारित एक नाटक के खेले जाने का वर्णन आया है। रामायण में भी 'नट', 'नर्तक', 'नाटक', 'रङ्गमञ्च' आदि का वर्णन स्थान स्थान पर मिलता है। रामायण में अभिनेता के अर्थ में 'कुशीलव' शब्द का प्रयोग भी पाया जाता है। महावैयाकरण पाणिनि ने 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इस सूत्र में नट सूत्र शब्द से नाट्यशास्त्र का स्मरण किया है।

इन सारी बातों पर ध्यान देने से स्पष्ट हो जाता है कि उनके पूर्व ही अनेक नाटक रचे जा चुके होंगे, जिन नाटकों के बाद इन नटसूत्रों की रचना हुई होगी, जिन्हें पाणिनि ने पूर्वनिर्दिष्ट सूत्र में स्मरण किया है। लक्ष्य ग्रन्थों को देखकर ही लक्षण ग्रन्थ बनते हैं। अतः नटसूत्रों से पूर्व में नाटकों का अस्तित्व मानना होगा। इस तरह हम देखते हैं कि संस्कृत नाटक साहित्य की परम्परा अतिप्राचीन है।

प्राचीन पद्धति के अनुसार विचार करने से भी नाटक साहित्य की प्राचीनता सिद्ध होती है। भरत ने अपने नाट्यशास्त्र में लिखा है :—

"महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः। क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद् भवेत्॥
न वेदव्यवहारोऽयं संश्राव्य शूद्रजातिषु। तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम्॥

एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च।
सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित्॥

धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससंग्रहम्। भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम्॥
सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शकम्। नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम्॥
एवं संकल्प्य भगवान् सर्ववेदाननुस्मरन्। नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम्॥

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च। यजुर्वेदादभिनयान् रसानाथर्वणादपि॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना। एवं भगवता सृष्टो ब्रह्मणा ललितात्मकम्॥
आज्ञापितो विदित्वाहं नाट्यवेदं पितामहात्।
पुत्रानध्यापय योग्यान् प्रयोगं चास्य तत्त्वतः ॥
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने। अभवन् क्षुभिताः सर्वे दैत्या ये तत्र सङ्गताः ॥
देवतानामृषीणाञ्च राज्ञामथ कुटुम्बिनाम्। कृतानुकरणं लोके नाट्यमित्यभिधीयते॥

शारदातनय ने भी अपने 'भावप्रकाशन' नामक ग्रन्थ में लिखा है —

कल्पस्यान्ते कदाचित्तु दृष्ट्वा लोकान्महेश्वर ।
स्वे महिम्नि स्थित स्वैरं नृत्यन्नानन्दनिर्भरम् ॥
मनसैवासृजद्विष्णुं ब्रह्माणं च महेश्वर । नियोगाद् देवदेवस्य ब्रह्मा लोकानथासृजत्॥
दृष्ट्वा च देवदेवस्य पुरा नृत्तमथास्मरत्। दिव्यं चारित्रमेतत् स कथमभ्यस्यतामिति ॥
इति चिन्तापरे तस्मिन्नभ्यगाद्विश्वेश्वर । स नाट्यवेदमध्याप्य सप्रयोगं चतुर्मुखम्॥
उवाच वाक्यं भगवान् नन्दी तच्चिन्तितार्थवित्।
नाट्यवेदोपदिष्टानि रूपकाणि च यानि तु॥
विधाय तेषामेकन्तु रूपकं लक्षणान्वितम्। भरतेषु प्रयोज्य तत्त्वं सम्यग् विजानता॥
तस्मिन् प्रयुक्ते भरतैर्भावाभिनयकोविदैः ।
साधनानि च कर्माणि प्रत्यक्षाणि भवन्ति ते ॥
एवं मुखमन्तरयान्नन्दी स भगवान् प्रभु । श्रुत्वैतद्वचनं प्रीतो ब्रह्मा देवं समस्मरत्॥
ततस्त्रिपुरदाहाख्यं कदाचिद् ब्रह्मसंसदि। प्रयुज्यमाने भरतैर्भावाभिनयकोविदैः ॥
तदेतत् प्रेक्षमाणस्य मुनिभ्यो ब्रह्मण क्रमात्।
वृत्तिभिः सह चत्वारः सन्ध्याराध्या विनिर्गताः ॥"

उपर्युक्त समीक्षा तथा उद्धरणों से यह असन्दिग्ध रूप में कहा जा सकता है कि संस्कृत नाटक साहित्य ने अपने क्रमबद्ध विकास में वैदिक वाङ्मय, इतिहास एवं पुराणों से सहायता एवं प्रेरणा पाई है। इसमें भी सन्देह का स्थान नहीं है कि संस्कृत नाटकों के विकास में पर्याप्त समय लगा होगा।

कुछ पाश्चात्य विद्वानों का कहना है कि भारतीय नाटक साहित्य ग्रीक नाटकों से प्रभावित है। उनका तर्क है कि सिकन्दर बड़ा नाटक प्रिय राजा था, उसके मनोरंजनार्थ नाटकों का प्रचुर अभिनय हुआ करता था। भारत में आने वाले अन्य ग्रीक राजाओं की सभा में भी नाटक का काफी प्रचार था। इसका प्रभाव संस्कृत नाटक साहित्य पर पड़ा, किन्तु भारतीय प्रतिभा ने ग्रीक नाटकों के प्रभाव को आत्मसात् कर लिया।

जहाँ तक विचार का सम्बन्ध है इस बात में कुछ तथ्य नहीं मालूम पड़ता है। जैसा कि पहले कहा गया है, हम भारतीय नाटक साहित्य को वेदों पर आधारित मानते हैं

तब उस पर ग्रीक नाटकों के प्रभाव की कल्पना क्यों की जाय ? यदि हम भारतीय नाटक साहित्य का विकास वेदमूलक मानते हैं तब तो वह स्वतन्त्र भी हो सकता है, उस पर ग्रीक प्रभाव की कल्पना कैसे प्रमाणित हो सकेगी ? ग्रीक नाटकों के साथ भारतीय नाटकों के तुलनात्मक अध्ययन से भी इनका अवान्तर भेद ही सिद्ध होता है। कुछ लोगों ने भारतीय नाटकों में 'जवनिका' शब्द का प्रयोग देखा, उसका शुद्ध रूप 'यवनिका' को माना और इसी 'यवनिका' शब्द के आधार पर कहना प्रारम्भ कर दिया कि भारतीय नाटक साहित्य पर यवनदेश यूनान का प्रभाव पड़ा है। यह कथन भी नितान्त भ्रमपूर्ण है। 'यवनिका' नहीं 'जवनिका' शब्द ही शुद्ध रूप है, वह द्रुतगामी वस्त्र खण्डों से बनी होने के कारण 'जवनिका' कही जाती है। राजशेखर ने जवनिका शब्द का प्रयोग किया है, उनके प्राकृत प्रयुक्त जवनिका शब्द का संस्कृत संस्करण 'यवनिका' कर इन स्वयंभू संस्कृतज्ञों ने यूनान के सम्बन्ध का आविष्कार कर डाला। वस्तुतः संस्कृत तथा प्राकृत में भी जवनिका शब्द ही है। इस तरह के अज्ञानमूलक तर्कों की और क्या आलोचना की जाय ? भारतीय रङ्गमञ्च की व्यवस्था पूर्णता भी यूनानी प्रभाव की चर्चा के विपरीत है। यूनान के नाटक जब खुले आकाश में खेले जाते थे, तब भी भारत का रङ्गमञ्च व्यवस्थित था, जिसका प्रभाव जावा, सुमात्रा प्रभृति देशों के नाटक पर पड़ा।

## संस्कृत नाटक का प्रभाव

संस्कृत में नाटकों की संख्या बहुत अधिक नहीं है, परन्तु वह बहुत कम भी नहीं है। सवाधिक नाटककार संस्कृत में गिनाये जा सकते हैं। संस्कृत नाटककारों में सर्वप्रथम नाटककार कौन है, इस प्रश्न का समाधान सरल नहीं है। इसका उत्तर यदि दिया जाय कि भास ही सर्वप्रथम संस्कृत नाटककार हुए तो प्रायः यह उत्तर अधिक लोगों को ठीक मालूम पड़ेगा।

'लूडरसन' महोदय का कथन है कि सर्वप्रथम संस्कृत नाटककार 'अश्वघोष' हैं। 'लूडरसन' ने 'तूर्फान' नगर में अश्वघोष के तीन नाटक प्राप्त किये थे, जिनमें एक का नाम 'शारिपुत्रप्रकरण' था। यह छः अङ्कों का नाटक है। इसमें शारिपुत्र मौद्गल्यायन की प्रव्रज्या का वृत्तान्त वर्णित है। दूसरा और तीसरा नाटक अधूरा है। इन नाटकों की भाषा संस्कृत है। कालिदास को ही सर्वप्रथम नाटककार मानने वाले लोगों की कमी नहीं है। यह भी हो सकता है कि कालिदास के पहले बने नाटक इन दिनों अप्राप्य हो गये हों और अब कालिदास के नाटक ही आदिम नाटक कहे जाने के अधिकारी हो गये हों।

## संस्कृत में नाटक समृद्धि

संस्कृत भाषा में लिखे गये नाटकों की संख्या प्रचुर है, यह बात कही जा चुकी है। केवल संख्या की दृष्टि से ही नहीं, नाटक में अपेक्षित अन्यान्य गुणों की दृष्टि से भी

संस्कृत नाटक साहित्य को समृद्ध माना जाता है। जिस प्रकार हमारे भारतवर्ष की समृद्धता की सूचना व्यास, वाल्मीकि, कालिदास, माघ आदि की काव्य राशि से प्राप्त होती है, उसी तरह संस्कृत के नाटक शाकुन्तल, रत्नावली आदि भी नितान्त समृद्ध हैं। नाटकों की साज सज्जा, पात्रों की वेशभूषा, स्थान विशेष की कल्पना, परिस्थिति-विशेष की उपस्थापना आदि बातें ऐसी होती हैं जिनसे समृद्ध नाटक तात्कालिक समाज की समृद्धि का अनुमान कराने में सहायक होते हैं। इस दृष्टि से संस्कृत नाटक नितान्त समृद्ध कहे जा सकते हैं।

## संस्कृत नाट्यों के प्रभेद

अभिनेय साहित्य का प्रधान अङ्ग नाटक ही है। यद्यपि शास्त्रानुसार उसका मुख्य नाम रूपक है—'रूपारोपात्तु रूपकम्'। रूपक शब्द ही सभी अभिनेय काव्यों का परिचायक है, परन्तु आपामर साधारणजन रूपकमात्र को नाटक कह लेते हैं। संस्कृत भाषा निबद्ध अभिनेय साहित्य—

"नाटकमथ प्रकरणं भाण-व्यायोग-समवकार-डिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥"

इन दस भागों में विभक्त है, परन्तु इनमें सर्वाधिक समृद्ध नाटक ही है। अन्यान्य भागों पर उतना साहित्य नहीं प्रस्तुत किया गया है जितना नाटक पर।

नाटक में शृङ्गार तथा वीररस का प्राधान्य अपेक्षित है—'एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे।' मन के भाव प्रधानतः दो दशाओं में अधिक आस्वाद गोचर होते हैं—उदात्तता एवं माधुर्य। माधुर्य के आस्वादनार्थ किये गये प्रयास शृङ्गाररस प्रधान नाटकों के रूप में और उदात्तता के आस्वादनार्थ किये गये प्रयत्न वीररसप्रधान नाटकों में प्रथित होते हैं।

संस्कृत में लिखे गये नाटकों के प्राचीन प्रभेद दो ही थे। शृङ्गारप्रधान अथवा वीर-प्रधान। बाद में चल कर संस्कृत के नाटक कुछ दूसरी दिशा की ओर भी मुड़े। यद्यपि यह मुड़ना उनके ह्रास का परिचायक हुआ पर मुड़े वे अवश्य।

पण्डितों ने जब देखा कि वीर तथा शृङ्गार पर आधारित नाटकों में कुछ नई बात नहीं आ रही है, और इतने परिश्रम से मनोरञ्जन ज्ञानोपदेश तथा सरलता के साथ जनता तक नाटकों के द्वारा ही पहुँच सकते हैं, तब इन लोगों ने एक नये प्रकार के नाटक का निर्माण करना प्रारम्भ किया, जिसे बुद्धिपूर्वक ज्ञानोपदेश नाटक कहा जा सकता है। ऐसे नाटकों में प्रतीकों के माध्यम से गम्भीर दार्शनिक बातें प्रस्तुत की जाती हैं। इस तरह के नाटकों को 'प्रतीकात्मक' नाटक भी कहा जाता है। श्रीकृष्ण मिश्र का 'प्रबोध-चन्द्रोदय' इस पद्धति का एक सफल नाटक है।

## प्रभावतीपरिणय नाटक

प्रस्तुत 'प्रभावतीपरिणय' शृङ्गार रस प्रधान नाटक है। इसमें श्रीकृष्ण के पुत्र प्रद्युम्न और वज्रनाभासुर की कन्या प्रभावती का पावन एवं प्रेममूलक परिणय वर्णित किया गया है, यह आख्यान पौराणिक है अतः इसके द्वारा नाटक में अपेक्षित 'ख्यातवृत्त' की पूर्ति हो गई है। नाटक के लक्षण में लिखा है —

'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिषु समन्वितम्।
विलासर्द्धर्यादिगुणवद्युक्तं नानाविभूतिभिः॥
× × ×
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः'॥
× × ×

नायक में अपेक्षित गुण भी प्रद्युम्न में वर्तमान थे। इस प्रकार से नाटक के सभी तत्त्व, कथा, नायक, नायिका, वर्णनीय प्रभावादि, सारी सामग्री इसे नाटक बनाती है। इसमें वर्णित कथा महाभारत के अङ्गभूत हरिवंशपुराण के विष्णु पर्व में ९१वें अध्याय से ९७वें अध्याय तक वर्तमान है, वह इस प्रकार है —

## एकनवतितमोऽध्यायः

जनमेजय उवाच—

भानुमत्यापहरणं विजयः केशवस्य च। छालिक्यनयनं चैव देवलोकान्महामुने॥
क्रीडा च सागरे दिव्या वृष्णीनाममितौजसाम्। अश्रौषं परमाश्चर्यं मुने धर्मभृतां वर॥
वज्रनाभवधो युक्तो निकुम्भवधकीर्तने। तन्मे कौतूहलं श्रोतुं प्रसादाद् भवतो मुने॥

वैशम्पायन उवाच—

हन्त ते वर्णयिष्यामि वज्रनाभवधं नृप। विजयं चैव कामस्य साम्बस्यैव च भारत॥
मेरोः सानौ नरपते तपश्चक्रे महासुरः। वज्रनाभ इति ख्यातो निश्चितः समितिंजय॥
तस्य तुष्टो महातेजा ब्रह्मा लोकपितामहः। वरेण च्छन्दयामास तपसा परितोषितः॥
अवध्यत्वं स देवेभ्यो वव्रे दानवसत्तमः। पुरं वज्रपुरं चापि सर्वरत्नमयं शुभम्॥ ७॥
स्वच्छन्देन प्रवेशश्च न वायोरपि भारत। अचिन्तितेन कामानामुपपत्तिर्नराधिप॥
शाखा नगरमुख्यानां सम्बाधानां शतानि च। नगरस्याप्रमेयस्य समन्ताज्जनमेजय॥
तथा तदभवत् तस्य वरदानेन भारत। उवास वज्रनगरे वज्रनाभो महासुरः॥१०॥
कोटिशो वरलब्धं तमसुराः पर्युपासते। उपुर्वज्रपुरे राजन् सम्बाधेषु तथैव च॥११॥
शाखानगरमुख्येषु रम्येषु च नराधिप। हृष्टपुष्टप्रमुदिता नृप देवस्य शत्रवः॥ १२॥

वज्रनाभोऽथ दुष्टात्मा वरदानेन दर्पितः। पुरस्य चात्मनश्चैव जगद् बाधितुमुद्यतः॥
महेन्द्रमब्रवीद् गत्वा देवलोकं निवासिनम्। अहमीशितुमिच्छामि त्रैलोक्यं पाकशासन॥
अथवा मे प्रयच्छस्व युद्धं देवगणेश्वर।
सामान्यं हि जगत्कृत्स्नं काश्यपानां महात्मनाम्॥ १५॥
स बृहस्पतिना सार्द्धं मन्त्रयित्वा महेश्वरः। वज्रनाभं सुरश्रेष्ठः प्रोवाच कुरुनन्दन॥
सत्रेषु दीक्षितः सौम्य कश्यपो नः पिता मुनिः।
तस्मिन् वृत्ते यथा न्याय्यं तथा स हि करिष्यति॥ १७॥
ततः स पितरं गत्वा कश्यपं दानवोऽब्रवीत्। यथोक्तं देवराजेन प्रत्युवाचाथ कश्यपः॥
सत्रे वृत्ते करिष्यामि यथा न्याय्यं भविष्यति।
त्वं तु वज्रपुरे पुत्र वस गच्छ समाहितः॥ १९॥
एवमुक्ते वज्रनाभः स्वमेव नगरं गतः। महेन्द्रोऽपि ययौ देवो द्वारकां द्वारमालिनीम्॥
तत्र चान्तर्हितो देवो वासुदेवमथाब्रवीत्। वज्रनाभस्य वृत्तान्तं प्रत्युवाच जनार्दनः॥
वाँरेरुपस्थितो देव वाजिमेधो महाक्रतुः। तस्मिन् वृत्ते वज्रनाभं घातयिष्यामि वासव॥
तत्रोपायं प्रवेशे तु चिन्तयाव सतां गते।
नानिच्छया प्रवेशोऽस्ति तत्र वायोरपि प्रभो॥ २३॥
ततो गतो देवराजो वासुदेवेन सत्कृतः। वाजिमेधे च सम्प्राप्ते वसुदेवस्य भारत॥
तस्मिन् यज्ञे वर्तमाने प्रवेशार्थं सुरोत्तमौ। चिन्तयामासतुर्वीरौ देवराजाच्युतावुभौ॥
तत्र यज्ञे वर्तमाने सुनाट्येन नटस्तदा। महर्षींस्तोषयामास भद्रनामेति नामतः॥
तं वरेण मुनिश्रेष्ठाश्छन्दयामासुरात्मजम्। स वव्रे तु नटो भद्रो वरं देववरोपमः॥
देवेन्द्र कृष्णप्रद्युम्नैः सारस्वत्या प्रचोदितः। प्रणिपत्य मुनिश्रेष्ठानथमेधे समागतान्॥

नट उवाच—

भोज्यो द्विजानां सर्वेषां भवेयं मुनिसत्तमाः।
सप्तद्वीपां च पृथिवीं विचरेयमिमामहम्॥ २९॥
प्रसिद्धाकाशगमनः शक्तश्चैव विशेषतः। अवध्यः सर्वभूतानां स्थावरा ये च जङ्गमाः॥
यस्य यस्य च वेषेण प्रविशेयमहं सदा।
मृतस्य जीवतो वापि भाव्येनोत्पादितस्य वा॥ ३१॥
तद्रूपस्तादृशः स्यां वै जरारोगविवर्जितः। तुष्येयुर्मुनयो नित्यमस्य च मम सर्वदा॥
एवमस्त्विति तम्प्रोक्ता ब्राह्मणैर्नृपते नटः। सप्तद्वीपां वसुमतीं पर्यटत्यमरोपमः॥३३॥
पुराणि दानवेन्द्राणामुत्तरांश्च कुरूंस्तथा। भद्राश्वान् केतुमालांश्च कालाम्रद्वीपमेव च॥
पर्वणीषु तु सर्वासु द्वारकां यदुमण्डिताम्। आयाति वरदत्तः स शोवर्यंरो महाभटः॥
ततो हंसान् धार्तराष्ट्रान् देवलोकनिवासिनः।
उवाच भगवाञ्छक्रः सान्त्वयित्वा सुरेश्वरः॥ ३६॥

भगवन्तो भ्रातरोऽस्माकं काश्यपा देवपक्षिण ।
विमानवाहा देवाना सुकृतीना तथैव च ॥ ३७ ॥
देवानामस्ति कर्तव्य कार्यं शत्रुवधान्वितम् ।
तत्र कर्तव्य न मन्त्रश्च भेत्तव्यो व कथचन ॥ ३८ ॥
न कुर्वता दैवताज्ञामुग्रो दण्ड पतेदपि । सर्वत्राप्रतिषिद्ध वो गमनं हससत्तमा ॥
गत्वा प्रवेश्यमन्यपा वज्रनाभपुरोत्तमम् । इतोऽन्त पुरवापीषु चरध्वमुचित हि व ॥
तस्यास्ति कन्यारत्न हि त्रैलोक्यातिशय शुभम् ।
नाम्ना प्रभावती नाम चन्द्राभेव प्रभावती ॥ ४१ ॥
वरदानेन सा लब्धा मात्रा किल वरानना ।
हैमवत्या महादेव्या सकाशादिति म श्रुतम् ॥ ४२ ॥
स्वयवरा च सा कन्या बन्धुभि स्थापिता सती ।
आत्मेच्छया पति हसा वरयिष्यति शोभना ॥ ४३ ॥
तत्रवद्भिर्गुणा वाच्या प्रद्युम्नस्य महात्मन । सद्भूता कुलरूपस्य शीलस्य वयसस्तथा॥
यदा सा रक्तभावा च वज्रनाभसुता सती ।
तस्या सकाशात् सदेशो नयितव्य समाधिना ॥ ४५ ॥
प्रद्युम्नस्य पुनस्तस्मादानयध्व तथैव च । स्वबुद्ध्या प्राप्तकाल च सविधेय हित मम ॥
नेत्रवक्त्रप्रसादश्च कर्तव्यस्तत्र सर्वथा ॥ ४७ ॥
तथा तथा गुणा वाच्या प्रद्युम्नस्य महात्मन ।
यथा यथा प्रभावत्या मनस्तत्र भवेत् स्थितम् ॥ ४८ ॥
वृत्तान्तश्चानुदिवस प्रदेयो मम सर्वथा । द्वारवत्या च कृष्णस्य भ्रातुर्मम यवीयस ॥
तावद्यत्नश्च कर्तव्य प्रद्युम्नो यावदात्मवित् । पर्यावर्तद् वरारोहा वज्रनाभसुता क्षिप्रु ॥
अवध्यास्ते तु देवाना ब्राह्मणो वरदर्पिता । देवपुत्रैर्हि हन्तव्या प्रद्युम्नप्रमुखैर्युधि ॥
मन्ये वृत्तवरस्तस्य वेगमास्थाय यादवा । प्रद्युम्नाद्या गमिष्यन्ति वज्रनाभविनाशना ॥
एतच्च सर्वं कर्तव्यमन्यच्च सर्वमेव हि । प्राप्तकाल विधातव्यमस्माक प्रियकाम्यया ॥
प्रवेशस्तत्र देवाना नास्ति हसा कथचन । वज्रनाभेप्सिते तत्र प्रदेशे खलु सर्वथा ॥

## द्विनवतितमोऽध्यायः

वैशम्पायन उवाच—

ते वासवस्य श्रुत्वा हसा वज्रपुर ययु । पूर्वोचित हि गमन तेषा तत्र जनाधिप ॥
ते दीर्घिकासु रम्यासु निपेतुर्वीर पक्षिण । पद्मोत्पलैरावृतासु काञ्चनै स्पर्शनक्षमै ॥
ते वै नदन्तो मधुर सस्कृतापूर्वभाषिण । पूर्वमप्यागतास्ते [illegible] विस्मय जनयन्ति हि॥
अन्त पुरोपभोग्यासु चेरुर्वापीषु ते नृप । दृष्टास्ते वज्रनाभस्य त्रिविष्टपनिवासिन ॥

आलपन्तं सुमधुरं धार्तराष्ट्रा जनेश्वर । स तानुवाच दैतेयो धार्तराष्ट्रानिदं वचः ॥
त्रिविष्टपे नित्यरता भवन्तश्चारुभाषिणः । यदैवेहोत्सवोऽस्माकं भवद्भिरुपगम्यते ॥ ६ ॥
आगन्तव्यं चात्र पादाः स्वमिदं भवतां गृहम् ।
विस्रब्धं च प्रवेष्टव्यं त्रिविष्टपनिवासिभिः ॥ ७ ॥

ते तथोक्ताः शकुनयो वज्रनाभेन भारत । तथेत्युक्त्वा हि विविशुर्दानवेन्द्रनिवेशनम् ॥
चक्रुः परिचयं ते च देवकार्यव्यपेक्षया । मानुषालापिनस्ते च कथाश्चक्रुः पृथग्विधाः ॥
वंशबद्धाः काश्यपानां सर्वकल्याणभागिनाम् ।
श्रियो देवैर्विशेषेण श्रूयन्ते मद्गता कथा ॥ १० ॥

विचरन्तस्ततो हंसा ददृशुश्चारुहासिनीम् । प्रभावतीं वरारोहां वज्रनाभसुतां तदा ॥
हंसाः परिचिता चक्रुस्तां मनश्चारुहासिनीम् ।
सखीं शुचिमुखीं चक्रे हंसीं राजसुता तदा ॥ १२ ॥
सा तां कदाचित् प्रपच्छ वज्रनाभसुतां सखीम् ।
विश्रम्भितां प्रपच्छ पूर्वं राजपानकलाबैर्वराम् ॥ १३ ॥
त्रैलोक्यसुन्दरीं वेद्मि त्वामहं हि प्रभावति ।
रूपशीलगुणैर्देवि किञ्चित् त्वां वक्तुमुत्सहे ॥ १४ ॥
व्यतिक्रामति ते भीरु यौवनं चारुहासिनि । यदतीतं पुनर्नैति गतं स्रोतो ह्यपामिव ॥
कामोपभोगतुल्या हि रतिर्देवि न विद्यते ।
स्त्रीणां जगति कल्याणि सत्यमेतद् ब्रवीमि ते ॥ १६ ॥
स्वयंवरे च न्यस्ता त्वं पित्रा सर्वाङ्गशोभने ।
न च कञ्चिद् वरयसे देवासुरकुलोद्भवान् ॥ १७ ॥
व्रीडिता यान्ति सुश्रोणि प्रत्याख्यातास्त्वया शुभे ।
रूपशौर्यगुणैर्युक्तान् सदृशांश्च कुलस्य हि ॥ १८ ॥
आगतान् नेच्छसे देवि सदृशान् कुलरूपयोः ।
द्रक्ष्यति किमर्थं त्वां प्रद्युम्नो रुक्मिणीसुतः ॥ १९ ॥
त्रैलोक्ये यस्य रूपेण सदृशो न कुलेन वा ।
गुणैर्वा चारुसर्वाङ्गि शौर्येणाप्यथ वा शुभे ॥ २० ॥

देवेषु देवः सुश्रोणि दानवेषु च दानवः । मानुषेष्वपि धर्मात्मा मनुष्यश्च महाबलः ॥
यं सदा देवि दृष्ट्वा हि स्रवन्ति जघनानि हि ।
आर्तवानीव धेनूनां योषितां सलिलानिव ॥ २२ ॥
स पूर्णचन्द्रेण मुखं नयने वा कुशेशये । उरसा सोमतामाशु हि ... वा ॥
जानन् माधवसुतस्य पुत्रः स विदितः शुभे ।
कृत्वानर्हं वरे साक्षाद् विष्णुना प्रभविष्णुना ॥ २३ ॥

हतेन शम्बरो बाल्ये येन पापो निवर्हित ।
मायाश्च सर्वा सम्प्राप्ता न च शील विनाशितम् ॥ २५ ॥
यान् यान् गुणान् पृथुश्रोणि मनसा कल्पयिष्यसि ।
एष्वप्यास्त्रिषु लोकेषु प्रद्युम्ने सर्वं एव ते ॥ २६ ॥
रुच्या वह्निप्रतीकाश क्षमया पृथिवीसम ।
तेजसा सूर्यसदृशो गाम्भीर्येण ह्रदोपम ।प्रभावती शुचिमुखीं वितीहोवाच भामिनी ॥

प्रभावत्युवाच—

विष्णुर्मानुपलोकस्थ श्रुत सुबहुशो मया ।
पितु कथयत सौम्ये नारदस्य च धीमत ॥ २८ ॥
शत्रु किल स दैत्याना वर्जनीय सदानघे ।
कुलानि किल दैत्याना तेन दग्धानि मानिनि ॥ २९ ॥
प्रदीप्तेन रथाङ्गेन शार्ङ्गेण गदया तथा । शाखामगरदक्षेपु वसन्ति किल येऽसुरा ॥
श्रूयेते दानवेन्द्रेण सदिग्यन्त हि त प्रति ।
मनोरथो हि सर्वासा स्त्रीणामेव शुचिस्मिते ॥ ३१ ॥
भवद्धि मे पतिकुल श्रेष्ट पितृकुलादिति ।
यदि नामाप्युपाय स्यात् तस्येहागमन प्रति ॥ ३२ ॥
महाननुग्रहो मे स्यात् कुल स्यात् पावित च मे ।
समर्थना मे पृष्टा त्व प्रयच्छ शुचिस्मिते ॥ ३३ ॥
प्रद्युम्न स्याद् यथा भर्ता स मे वृष्णिकुलोद्भव ।
अत्यन्तवैरी दैत्यानामुद्वेगनकरो हरि ॥ ३४ ॥
असुराणा स्त्रियो वृद्धा कथयन्त्यो मया श्रुता ।
प्रद्युम्नस्य तथा जन्म पुरस्तादपि मे श्रुतम् ॥ ३५ ॥
यथा च तेन निहतो बलवान् कालशम्बर । हृदि मे वर्तते नित्यप्रद्युम्न खलु सत्तमे ॥
हेतु स नास्ति स्यात् तन यथा मम समागत ।
दासी तवाह सख्याहं दूत्ये त्वा च विसर्जये ॥ ३७ ॥
पण्डितासि वदोपाय मम तस्य च सगमे ।
ततस्ता सान्त्वयित्वा सा प्रहसन्तीदमब्रवीत् ॥ ३८ ॥

शुचिमुख्युवाच—

तत्र दूती गमिष्यामि तवाह चारुहासिनि ।
इमा भक्तिं तवोदारा प्रवक्ष्यामि शुचिस्मिते ॥ ३९ ॥
तथा चैव करिष्यामि यथैष्यति तवान्तिकम् ।
साक्षात्कामेन सुश्रोणि भविष्यति सकामिनी ॥ ४० ॥

इति मे भाषितं नित्यं स्नेयाः शुचिलोचने । कथाकुशलतां चित्रे कथयस्वायतेक्षणे ॥

मम त्वं तत्र मे देवि हितं सम्यक् प्रयस्व मे ।
इत्युक्ता सा तथा चक्रे यत्नं सा तानथाब्रवीत् ॥ ४२ ॥

दानवेन्द्रश्च तां हंसीं पप्रच्छान्तःपुरे तदा । प्रस्तावस्था समाख्याता कथाकुशलता तव ॥
तत्त्वं शुचिस्मिते ब्रूहि कथां योग्यतया वरे । किं त्वया दृष्टमाश्चर्यं जगत्युत्तमदर्शिनि ॥
अदृष्टपूर्वमन्यैर्वा योग्यायोग्यमनिन्दिते । सोवाच वज्रनाभं तु हंसी नरवरोत्तम ॥

श्रूयतामित्यथामन्त्र्य दानवेन्द्रं महाद्युतिम् ।

दृष्टा मे शाण्डिली नाम साध्वी दानवसत्तम । आश्चर्यं कर्म कुर्वन्ती मेरुपार्श्वे मनस्विनी ॥

सुमनाश्चैव कौसल्या सर्वभूतहिते रता ।
कथंचिद् वरशाण्डिल्याः शैलपुत्र्याः शुभा सखी ॥ ४७ ॥

नटश्चैव मया दृष्टो मुनिदत्तवरः शुभः । कामरूपी च सोऽत्यर्थं त्रैलोक्ये नित्यसम्मतः ॥

कुरून् सोत्तरकुरून् वीर कालाम्रद्वीपमेव च ।
भद्राश्वान् केतुमालांश्च द्वीपानन्यांस्तथानघ ॥ ४९ ॥
देवगन्धर्वरूपाणि नृत्यानि विविधानि च ।
स वेत्ति देवान् नृत्येन विस्मापयति सर्वथा ॥ ५० ॥

वज्रनाभ उवाच—

श्रुतमेतन्मया हंसि न चिरादिव विस्तरम् ।
चारणानां कथयतां सिद्धानां च महात्मनाम् ॥ ५१ ॥

कुतूहलं ममाप्यस्ति सर्वथा पक्षिनन्दिनि । नटे दृष्टवरे तस्मिन् संस्तवस्तु न विद्यते ॥

हंस्युवाच—

सप्तद्वीपान् विचरति नटः स दितिजोत्तम । गुणवन्तं जनं श्रुत्वा गुणकार्येः स सर्वथा ॥
तव चेच्छ्रुणुयाद् वीर सद्भूतं गुणविस्तरम् । नटं तदागतं विद्धि पुरं तव महासुर ॥

वज्रनाभ उवाच—

उपायः क्रियतां हंसि येनेह स नटः शुभे । आगच्छेन्मम भद्रं ते विषयं पक्षिनन्दिनि ॥
ते हंसा वज्रनाभेन कार्यहेतोर्विसर्जिताः । देवेन्द्रायाथ कृष्णाय शशंसुः सर्वमेव तत् ।
अर्थान्नटेन प्रद्युम्नो निपुणस्तत्र कर्मणि । प्रभावं याश्च संसर्गं वज्रनाभवधे तथा ॥५३॥
दैवीं मायां समाश्रित्य सन्निधाय हरिर्नटम् । नटवेषेण सैन्यानां प्रेषयामास भारत ॥

प्रद्युम्नं नायकं कृत्वा साम्बं कृत्वा विदूषकम् ।
परिपार्श्वं गदं वीरमन्यान् सैन्यांस्तथैव च ॥ ५९ ॥

वारमुख्या नटीः कृत्वा तथर्दंमदनाम्नदा । तथैव भद्रं भद्रस्य महापांश्च तथाविधान् ॥
सपक्षविहितं रम्यं विमानं ते महारथाः । कुसुरारुह्य कायार्थं देवानाममितौजसाम् ॥
एकैकस्य सभा रूपे पुरुषा पुरुषस्य ते । स्त्रीणां च सदृशाः सर्वे ते स्वरूपैर्नराधिपः ॥
ते वज्रनगरस्याथ सामान्नगरमुत्तमम् । जग्मुर्दानवसंकीर्णं सुपुरं नाम नामतः ॥

## त्रिनवतितमोऽध्यायः

वैशम्पायन उवाच—

ततः सुपुरवासीनामसुराणां नराधिप । ददावाज्ञां वज्रनाभो दीयतां गृहमुत्तमम् ॥
आतिथ्यं क्रियतामेषां बहुरत्नसमुपायनम् । वासांसि सुविचित्राणि सुखाय जनरञ्जनम् ॥
भर्तुराज्ञां समालम्ब्य तथा चक्रुश्च सर्वशः । पूर्वश्रुतो नटः प्राप्तः कौतूहलमनीजनत् ॥
नटस्याथ ददुर्दैत्याः सत्कारं परया मुदा । पर्यायार्थे ददुश्चापि रत्नानि सुबहून्यथ ॥
ततः स ननृते तत्र वरदत्तो नटस्तथा । सुपुरे पुरवासीनां परं हर्षं समादधत् ॥५॥
रामायणं महाकाव्यमुद्दिश्य नाटकं कृतम् । जन्म विष्णोरमेयस्य राक्षसेन्द्रवधेप्सया ॥

लोमपादो दशरथ ऋष्यशृङ्गं महामुनिम् ।
शान्तामप्यानयामास गणिकाभिः सहानघ ॥ ७ ॥

रामलक्ष्मणशत्रुघ्ना भरतश्चैव भारत । ऋष्यशृङ्गश्च शान्ता च तथा रूपैर्नटैः कृता ॥
तत्कालजीविनो वृद्धा दानवा विस्मयं गताः । आचचक्षुश्च तेषां वै रूपतुल्यत्वमद्भुतम् ॥

सत्काराभिनयौ तेषां प्रस्तावानां च धारणम् ।
दृष्ट्वा सर्वे प्रवेशं च दानवा विस्मयं गताः ॥ १० ॥

ते रक्ता विस्मयं नेदुरसुराः परया मुदा । उत्थायोत्थाय नाट्यस्य विषयेषु पुनः पुनः ॥
ददुर्वस्त्राणि तुष्टाश्च ग्रैवेयवलयानि च । हारान् मनोहरांश्चैव हेमवैडूर्यभूषितान् ॥
पृथगर्थेषु दत्तेषु लोकैस्तैः तुतुषुर्नटाः । असुराश्च मुनींश्चैव गोत्रैरभिजनैरपि ॥१३॥
प्रेषितं वज्रनाभस्य शाखानगरवासिभिः । नटस्य दिव्यरूपस्य नरेन्द्रागमनं तदा ॥
पुरा श्रुतार्थो दैत्येन्द्रः प्रेषयामास भारत । आनीयतां वज्रपुरं नटोऽसाविति हर्षितः ॥
दानवेन्द्रवचः श्रुत्वा शाखानगरवासिभिः । नीता वज्रपुरं रम्यं नटवेषेण यादवाः ॥
आवासश्च ततो दत्तः सुकृतो विश्वकर्मणा । एतच्च यच्च तत् सर्वं दत्तं शतगुणोत्तरम् ॥
अथ कालोत्सवं चक्रे वज्रनाभो महासुरः । कारयामास रम्यं च चमूवाहं महद्बलान् ॥

ततस्तान् परिविश्रान्तान् प्रेक्षार्थाय प्रचोदयत् ।
दत्त्वा रत्नानि भूरीणि वज्रनाभो महाबलः ॥ १९ ॥
उपविष्टश्च तान् द्रष्टुं सह ज्ञातिभिरात्मवान् ।
छन्ने चान्तःपुरं स्थाप्य चतुर्दश्ये नराधिप ॥ २० ॥

भैमापि बद्धनेपथ्या नटवेषधरास्तथा । कार्यार्थं भीमकर्माणो नृत्यार्थमुपचक्रमुः ॥
ततो घनं ससुषिरं मुरजानकभूषितम् । तन्त्रीस्वरगणैर्विद्धानातोद्यानन्ववादयन् ॥
ततस्तु देवगान्धारं छालिक्यश्रवणामृतम् । भैमस्त्रियः प्रजगिरे मनःश्रोत्रसुखावहम् ॥
आगान्धारग्रामरागं गङ्गावतरणं तथा । विद्धमासारितं रम्यं जगिरे स्वरसम्पदा ॥
लयतालसमं श्रुत्वा गङ्गावतरणं शुभम् । असुरास्तोषयामासुरुत्थायोत्थाय भारत ॥

नान्दिं च वादयामासुः प्रद्युम्नो गद एव च ।
साम्बश्च वीर्यसम्पन्नः कार्यार्थं नटतां गतः ॥ २६ ॥
नान्द्यन्ते च तदा श्लोकं गङ्गावतरणाश्रितम् ।
रौक्मिणेयस्तदोवाच सम्यक् स्वभिनयान्वितम् ॥ २७ ॥
रम्भाभिसारं कौबेरं नाटकं ननृतुस्ततः । शूरो रावणरूपेण रम्भावेषा मनोवती ॥२८॥
नलकूबरस्तु प्रद्युम्नः साम्बस्तस्य विदूषकः । कैलासो रूपितश्चापि मायया यदुनन्दनैः॥
शापश्च दत्तः क्रुद्धेन रावणस्य दुरात्मनः ।
नलकूबरेण च यथा रम्भा चाप्यथ सान्त्विता ॥ ३० ॥
एतत् प्रकरणं वीरा ननृतुर्यदुनन्दनाः । नारदस्य मुनेः कीर्तिं सर्वज्ञस्य महात्मनः ॥
पादोद्धारेण नृत्येन तथैवाभिनयेन च । तुष्टुवुर्दानवा धीरा भैमानाममितौजसाम् ॥
ते ददुर्वंशमुख्यानि रत्नान्याभरणानि च । हारांस्तरलविद्धांश्च वैडूर्यमणिभूषितान् ॥
विमानानि विचित्राणि रथांश्चाकाशगामिनः ।
गजानाकाशगांश्चैव दिव्यनागकुलोद्भवान् ॥ ३४ ॥
चन्दनानि च दिव्यानि शीतानि रसवन्ति च ।
गुरूण्यगुरुमुख्यानि गन्धाद्यानि च भारत ॥ ३५ ॥
चिन्तामणींश्चोदारांश्च चिन्तिते सर्वकामदान् ।
प्रेक्षासु तासु यद्धीषु ददन्तो दानवास्तथा ॥ ३६ ॥
धनरत्नैर्विरहिता कृता पुरुषसत्तम । स्त्रियो दानवमुख्यानां तथैव च जनेश्वर ॥३७॥
ततो हंसी प्रभावत्या सखी प्राह प्रभावतीम् ।
गतास्मि द्वारकां रम्यां भैमगुप्तामनिन्दिते ॥ ३८ ॥
प्रद्युम्नश्च मया दृष्टो विविक्ते चारुलोचने । भक्तिश्च कथिता तस्य मया तव शुचिस्मिते॥
तेन दृष्टेन कालश्च कृतः कमललोचने । अद्य प्रदोषसमये त्वया सह समागमे ॥४०॥
तदद्य रुचिरश्रोणि तव प्रियसमागमः । न ह्यारमवति भाषन्ति मिथ्या भैमकुलोद्भवाः ॥
ततः प्रभावती हृष्टा हंसां तामिदमब्रवीत् । उषितासि ममावासे स्वप्तुमर्हसि सुन्दरि॥
त्वयाहं सहिताऽऽवाम द्रष्टुमिच्छामि केशवम् ।
निःसाध्वसा भविष्यामि त्वया सह विहङ्गमे ॥ ४३ ॥
हंसी तथेति चोवाच सखीं कमललोचनाम् । आरुरोह च तद्धर्म्यं प्रभावत्या विहङ्गमा॥
विश्वकर्मकृते तत्र हर्म्यपृष्ठे प्रभावती । सविधानं चकाराशु प्रद्युम्नागमनक्षमम् ॥४५॥
तस्मिन् कृते सविधाने काममामन्त्रितुं ययौ । प्रभावतीमनुज्ञाप्य हंसी वायुसमा गतौ॥
नटवेषधरं कामं गत्वोवाच शुचिस्मिता । अद्य भूतः स भगवन् समयो वर्तते निशि॥
समेति प्राह तां कामः सा निवृत्ताथ पक्षिणी ।
अभ्यागता च मां हंसी प्रभावतिमथाब्रवीत् ।
अभ्यति रौक्मिणयोऽमायामसायतलोचन ॥ ४८ ॥

प्रद्युम्नो नीयमानं तु ददृशे माल्यमात्मवान्। भ्रमरैरावृतं वीरः सुगन्धमरिमर्दनः॥
निलिल्ये तत्र माल्ये तु भूत्वा मधुकरस्तदा।
प्रभावत्या नीयमाने विदितार्थः प्रतापवान्॥ ५० ॥
प्रवेशितं च तन्माल्यं स्त्रीभिर्मधुकरावृतम्।
उपनीतं प्रभावत्यै स्त्रीभिस्तद् भ्रमरावृतम्॥ ५१ ॥
अविदूरे च विन्यस्तं प्रभावत्या जनाधिप।
भ्रमरास्ते ययुः सौम्य संध्याकाले ह्युपस्थिते॥ ५२ ॥
स भैमप्रवरो वीरस्तैः सहायैर्विहीनतः। कर्णोत्पले प्रभावत्या निलिल्ये शनकैरिव॥
ततः प्रभावती हंसीमुवाच वदतां वरा। उद्यतं पूर्णचन्द्रं सा समीक्ष्यातिमनोहरम्॥
सखि दहन्ति मेऽङ्गानि मुखं च परिशुष्यति।
औत्सुक्यं हृदि चातीव कोऽयं व्याधिरनौषधः॥ ५५ ॥
दधद् द्विगुणमौत्सुक्यमसौ पूर्णनिशाकरः।
नवोदितः शीतरश्मिः सख्य हरति च प्रियः॥ ५६ ॥
न दृष्टपूर्वो हि मया श्रुतमात्रेण काङ्क्षितः।
अहो धूमयतेऽङ्गानि स्त्रीस्वभावस्य धिक् खलु॥ ५७ ॥
वल्पयामि यथा बुद्ध्या यदि नाभ्येति मे प्रियः।
कुमुद्वतीगतं मार्गं हा गमिष्याम्यकिंचना॥ ५८ ॥
मदनाशीविषेणास्मि हा हा दष्टा मनस्विनी।
शीतवीर्याः प्रकृत्यैव जगतो ह्लादनाः सुखाः।
दहन्ति मम गात्राणि किं नु चन्द्रगभस्तयः॥ ५९ ॥
प्रकृत्या शीतलो वायुर्नानापुष्परजोवहः।
दावाग्निसदृशो मेऽद्य दन्दहीति शुभां तनुम्॥ ६० ॥
ततः स्वल्पमेव स्थैर्यं कार्यमिवात्मनः। नावतिष्ठति निर्धीर्यं मनः संकल्पधर्षितम्॥
विमनस्कास्मि मुह्यामि वेपथुर्मे महान् हृदि।
चक्रभ्रमीति च मे दृष्टिर्हा हा यामि क्षुन क्षयम्॥ ६२ ॥

## चतुर्नवतितमोऽध्यायः

वैशम्पायन उवाच—

आदिष्टेयं मया बाला सर्वथेत्यवगम्य तु। कार्ष्णिर्हृष्टेन मनसा हंसीमिदमुवाच ह॥
दैत्येन्द्रतनया प्राप्तमवगच्छस्व मामिह।
षट्पदैः सह षट्पादो भूत्वा माल्ये निलीय हि॥ २ ॥
विधेयोऽस्मि प्रभावत्या यथेष्टं मयि वर्तताम्।
इत्युक्त्वा दर्शयामास सुरूपो रूपमात्मनः॥ ३ ॥

तद्धर्म्यपृष्ठं प्रभया द्योतितं तस्य धीमतः ।
अभिभूता प्रभा चैव राजश्चन्द्रोद्भवा शुभा ॥ ४ ॥
प्रभावत्यास्तु तं दृष्ट्वा ववृधे कामसागरः ।
चन्द्रस्येवोदये प्राप्ते पर्वण्या सरितां पतिः ॥ ५ ॥
सलज्जाधोमुखी किञ्चित् किञ्चित् तिर्यगवक्षिणी ।
प्रभावती तदा तस्थौ निश्चलं कमलेक्षणा ॥ ६ ॥
करेणाथ प्रदेशे तां चारुभूषणभूषिताम् । स्पृष्ट्वोवाच वरारोहां रामाञ्चिततनुस्ततः ॥
मनोरथशतैर्लब्धं किं पूर्णेन्दुसमप्रभम् । अधोमुखं मुखं कृत्वा न मां किञ्चित् प्रभाषसे॥
प्रभोपमर्दं मा कार्षीर्वदनस्य वरानने । साध्वसं त्यज्यतां भीरु दासः साध्वनुगृह्यताम्॥
न कालमिव पश्यामि भीरु भीरुत्वमुत्सृज ।
याचाम्यपाऽञ्जलिं कृत्वा प्राप्तकालं निबोध मे ॥ १० ॥
गान्धर्वेण विवाहेन कुरुष्वानुग्रहं मम । देशकालानुरूपेण रूपेणाप्रतिमा सती ॥११॥
उपस्पृश्य ततो भैमो मणिस्थं जातवेदसम् । जुहाव समये वीरः पुष्पैर्मन्त्रानुदीरयन्॥
जग्राहाथ करं तस्या वराभरणभूषितम् । चक्रे प्रदक्षिणं चैव स मणिस्थं हुताशनम् ॥
प्रजज्वाल स तेजस्वी मानयन्प्रद्युम्नमच्युतात्मजम् ।
भगवाञ्जगतः साक्षी शुभस्याथाशुभस्य च ॥ १४ ॥
उद्दिश्य दक्षिणां वीरो विप्राणां यदुनन्दनः ।
उवाच हंसीं द्वारस्थां तिष्ठार्थं रक्ष पक्षिणी ॥ १५ ॥
तस्यां प्रणम्य यातायां कामस्तां चारुलोचनाम् ।
प्रगृह्य दक्षिणे हस्ते निनाय शयनोत्तमम् ॥ १६ ॥
ऊरावनोपवेश्यैनां सान्त्वयित्वा पुनः पुनः । चुचुम्ब शनकैर्गण्डे वामयन् मुखमारते॥
ततोऽस्याश्च पपौ वक्त्रपद्मं मधुकरो यथा । आलिलिङ्गे च सुश्रोणीं प्रभेगरतिकोविदः ॥
अरीरमद् रहस्येनां न चोद्वेजितवांस्तदा ।
अपकृष्टं च रत्यर्थं रतिकार्यविशारदः । उवास स तया सार्धं रमन् कृष्णसुतः प्रभुः॥
अरुणोदयकाले च ययौ यत्र नटालयम् । अकामया प्रभावत्या कथञ्चित् [illegible] विसर्जितः॥
तामेव मनसा कान्तां कान्तरूपां समुद्वहन् । स उपुर्नटायण चार्थार्थं भ्रमरराजः ॥
प्रतीक्षन्तस्तदा वाक्यमिन्द्रकेशवयोस्तदा । उद्योगं वज्रनाभस्य त्रैलोक्यविजयं प्रति॥
प्रतीक्षन्तो महात्मानो गुणमन्त्रणं रता । कश्यपस्य मुनेः सत्रं यावत् तावत्पराधिपः॥
देवासुराणां सर्वेषामविरोधो महात्मनाम् ।
त्रैलोक्यजिगीषार्थाय वर्ततां धर्मचारिणाम् ॥ २४ ॥
एवं काले प्रयाताणां वसतां तत्र धीमताम् । सम्प्राप्तः प्रावृषः रम्यः सर्वभूतमनोहरः ॥
अहर्निशं च वृत्तान्तं प्रयच्छन्ति मनोजवाः ।
शक्रकेशवयोर्हंसाः कुमाराणां महात्मनाम् ॥ २६ ॥

रेमे सह प्रभावत्या प्रद्युम्नश्चानुरूपया। रात्रौ रात्रौ महातेजा धार्तराष्ट्राभिरक्षितः॥
तैर्हि वज्रपुरं हंसैर्वसद्भिर्वासवाज्ञया। व्याप्तं नृप नटास्ताश्च न विदुः कालमोहिताः॥
दिवापि रौक्मिणेयस्तु प्रभावत्या नृपालये। तिष्ठत्यन्तर्हितो वीरो हंससंघाभिरक्षितः॥

माययास्य प्रतिच्छाया दृश्यते हि नटालये।
देहार्धेन तु कौरव्य सिषेवेऽसौ प्रभावतीम् ॥ ३० ॥
सनतिं विनयं शीलं लीलां दाक्ष्यमथार्जवम्।
स्पृहयन्त्यसुरा दृष्ट्वा विद्वत्तां च महात्मनाम् ॥ ३१ ॥
रूपं विलासं गन्धं च मञ्जुभाषामथार्यताम्।
तासां यादवनारीणां स्पृहयन्त्यसुरस्त्रियः ॥ ३२ ॥
वज्रनाभस्य तु भ्राता सुनाभो नाम विश्रुतः।
दुहितृद्वयं च नृपते तस्य रूपगुणान्वितम् ॥ ३३ ॥

एका चन्द्रवती नाम्ना गुणवत्यथ चापरा। प्रभावत्यालयं ते तु व्रजतः खलु नित्यदा॥
ददृशाते तु ते तत्र रतिसक्तां प्रभावतीम्। परिपप्रच्छतुश्चैव विस्रम्भोपगतां सतीम्॥

सोवाच मम विद्यास्ति याधीता काङ्क्षितं पतिम्।
स्वयं साऽऽनयत्याशु सौभाग्यं च प्रयच्छति ॥ ३६ ॥

देवं वा दानवं वापि विवशं सद्य एव हि। साहं रमामि कान्तेन देवपुत्रेण धीमता॥
दृश्यतां मत्प्रभावेण प्रद्युम्नः सुप्रियो मम। तं दृष्ट्वा विस्मयं याते रूपयौवनसम्पदम्॥
पुनरेवाब्रवीत् ते तु भगिन्यौ चारुहासिनी। प्रभावती वरारोहा कालप्राप्तमिदं वचः॥

देवा धर्मरता नित्यं दम्भशीला महासुराः।
देवास्तपसि रक्ता हि सुखे रक्ता महासुराः ॥ ४० ॥

देवाः सत्ये रता नित्यमनृते तु महासुराः। धर्मस्तपश्च सत्यं च यत्र तत्र जयो ध्रुवम्॥
देवपुत्रौ वरयतां पतिविद्यां ददाम्यहम्। उचितौ मे प्रभावेण सद्य एवोपलप्स्यथ॥

ता तथेत्यूचतुर्हृष्टे भगिन्यौ चारुलोचनाम्।
परिपप्रच्छ भैमं च कार्यं तत् पतिमानिनी ॥ ४३ ॥
स पितृव्यं गदं वीरं साम्बं चाथाब्रवीत् तदा।
रूपान्वितौ सुशीलौ च शूरौ च रणकर्मणि ॥ ४४ ॥

प्रभावत्युवाच—

परितुष्टेन दत्ता मे विद्या दुर्वाससा पुरा। परितुष्टेन सौभाग्यं स कन्यात्वमेव च॥४५॥

देवदानवयक्षाणां यं ध्यास्यति सा तं पतिम्।
भवितेति मया चेत्थं वीरोऽयमभिकाङ्क्षितः ॥ ४६ ॥
गृह्णीतं तदिमां विद्यां सद्यो वां प्रियसङ्गमः।
ततो जगृहतुर्हृष्टे तां विद्यां भगिनीमुखात् ॥ ४७ ॥

दध्यतुर्गदसाम्बौ च विद्यामभ्यस्य ते शुभे । तौ प्रद्युम्नेन सहितौ प्रविष्टौ भैमनन्दनौ ॥

प्रच्छन्नौ मायया वीरौ कार्ष्णिना मायिना नृप ।
गान्धर्वेण विवाहेन तावप्यरिबलार्दनौ ॥ ४९ ॥
पाणिं जगृहतुर्वीरौ मन्त्रपूर्वं सतां प्रियौ ।
चन्द्रवत्या गदः साम्बो गुणवत्या च कैशविः ॥ ५० ॥

रेमिरेऽसुरकन्याभिर्वीरास्ते यदुपुङ्गवाः । मार्गमाणास्त्वनुज्ञां ते शक्रकेशवयोस्तदा ॥

## पञ्चनवतितमोऽध्यायः

वैशम्पायन उवाच—

नभो नभस्येऽथ निरीक्ष्य मासि कामस्तदा तोयदवृन्दकीर्णम् ।
प्रभावतीं चारुविशालनेत्रामुवाच पूर्णेन्दुनिकाशवक्त्रः ॥ १ ॥
त्वदाननाभो वरगात्रि चन्द्रो न दृश्यते सुन्दरि चारुबिम्बः ।
स्वच्छेदपातानतिमैर्निरुद्धो बलाहकैश्चारु निरन्तरैर् ॥ २ ॥
संदृश्यते सुभ्रु तडिद् घनस्था त्वं हेमचार्वाभरणान्वितेव ।
मुञ्चन्ति धाराश्च घना नदन्तस्त्वद्धारयष्टेः सदृशा वराङ्गि ॥ ३ ॥
घनप्रदेशेषु बलाकपङ्क्त्यस्त्वद्दन्तपङ्क्तिप्रतिमा विभान्ति ।
निमग्नपद्मानि सरित्सु सुभ्रु न भान्ति तोयानि रयाकुलानि ॥ ४ ॥
अमी घना वायुवशोपयाता बलाकमालामलचारुदन्ताः ।
अन्योन्यमभ्याहनितुं प्रवृत्ता वनेषु नागा इव शुक्लदन्ताः ॥ ५ ॥
धनुस्त्रिवर्णं वरगात्रि पश्य कृतं मघापाङ्गमिवाननस्थम् ।
विभूषयन्तो गगनं घनाश्च प्रहर्षणं कामिजनस्य कान्ते ॥ ६ ॥
घनान् नदन्तः प्रतिनर्दमानान् निरीक्ष्य सुश्रोणि शिखीन् प्रहृष्यन् ।
समारतानुन्नतपिच्छभारान् प्रियाभिरामानुपनृत्यमानान् ॥ ७ ॥
हर्म्येषु चान्ये शशिपाण्डुरेषु राजन्ति सुश्रोणि मयूरसंघाः ।
मुहूर्तशोभामतिचारुरूपां दृष्ट्वा पतन्तो वलभीपुटेषु ॥ ८ ॥
प्रविश्य पक्षासनगह्वरेषु मुहूर्तचूडामणितां विधाय ।
प्रयान्ति भूमिं नवशाद्वलानामाक्रममाणा स्वचारुदेहाः ॥ ९ ॥
प्रवाति धारान्तरनिःसृतश्च सुखोऽनिलश्चन्दनपङ्कशीतः ।
कदम्बसर्जार्जुनपुष्पभूतं समावहन् गन्धमनङ्गबन्धुम् ॥ १० ॥
रतिश्रमस्वेदविनाशनस्तु नवोदभारानयने च हेतुः ।
न मारुतः स्याद् यदि चारुगात्रि न मेघकाले मम वल्लभः स्यात् ॥ ११ ॥

एवंविधेषु प्रियसङ्गमेषु रतावसाने यदुपैति वायुः ।
रतिश्रमस्वेदहरः सुगन्धी ततः परं किं सुखमस्ति लोके ॥ १२ ॥
जलाप्लुतानीक्ष्य महानदीनां सुगात्रि हंसाः पुलिनानि दृष्ट्वा ।
गताः श्रमं मानसवासलुब्धाः ससारसाः क्रौञ्चगणानुविद्धाः ॥ १३ ॥
न भान्ति नद्यो न सरांसि चैव हतत्विषीरायतचारुनेत्रे ।
गतेषु हंसप्लवसारसेषु रथाङ्गतुल्याह्वयनेषु चैव ॥ १४ ॥
भोगैकदेशेन शुभं शयानं ध्रुवं जगन्नाथमुपेन्द्रमीशम् ।
निद्राभ्युपेता वरकालतज्ज्ञा श्रियं प्रणम्योत्तरचारुरूपाम् ॥ १५ ॥
निद्रायमाणे भगवत्युपेन्द्रे मेघाम्बराक्रान्तनिशाकरोऽद्य ।
पद्मामलाभं कमलायताक्षि कृष्णस्य वक्त्रानुकृतिं करोति ॥ १६ ॥
कदम्बनीपार्जुनकेतकानां स्रजो मुरं कृष्णमुपानयन्ति ।
पुष्पाणि चान्यान्यृतुजं समस्ता कृष्णात् प्रसादानभिकाङ्क्षमाणा ॥ १७ ॥
नागाश्रयन्तो विपदिग्धवक्त्राः स्पृशन्ति पुष्पाण्यपि पादपान्यान् ।
पेपीयमानान् भ्रमरैर्नभांसि कौतूहलं ते जनयन्त्यतीव ॥ १८ ॥
तोयातिभाराम्बुदवृन्दनद्धं नभः पतिष्यन्तमिवाभिवीक्ष्य ।
पिपानगम्भीरमभिप्रवृष्टं मनोहरं चारुमुखस्तनोरु ॥ १९ ॥
बलाकमालाकुलमाल्यदाम्ना निरीक्ष्य रम्यं घनवृन्दमेतत् ।
सस्यानि भूमावभिवर्षमाणं जगद्धितार्थं निमलाक्ष्यष्टे ॥ २० ॥
जलावलम्बाम्बुदवृन्दकर्षी घनैर्घनान् योधयतीव वायुः ।
प्रवृत्तचक्रो नृपतिर्वनस्थान् गजान् गजैः स्वैरिव वीर्यदृप्तान् ॥ २१ ॥
अभीममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनं सुगन्धि ।
हर्षावहं चातकबर्हिणानां वराङ्गनानां जलदप्रियाणाम् ॥ २२ ॥
प्लवगमः षोडशपत्रशायी विरौति गोष्ठं सह कामिनीभिः ।
ऋचो द्विजातिः प्रियसत्यधर्मा यथा सुशिष्यैः परिवार्यमाणः ॥ २३ ॥
गुणः महारतोयदकालेऽयमतुद्भमेघस्वनभीषितानाम् ।
परिष्वजन्तः परिवर्द्धयन्ति विनापि शय्यासमयं प्रियाणाम् ॥ २४ ॥
दोषोऽप्यमेकः सलिलागमस्य मा भद्युदारान्वयवर्णशीले ।
न दृश्यते यत् तव वक्त्रतुल्यो घनग्रहग्रस्ततनुः शशाङ्कः ॥ २५ ॥
प्रदृश्यते भीरु यदा शशाङ्को घनान्तरस्थो जातः प्रदीपः ।
तदानुपश्यन्ति जनाः प्रहृष्टा बन्धुं प्रवासादिव सन्निवृत्तम् ॥ २६ ॥
विलापसाक्षी प्रियहीनितानां सदृश्यते भीरु यदा शशाङ्कः ।
नेत्रोत्सवं प्रोषितकामुकानां दृष्ट्वैव कान्तं भवतीत्यवैमि ॥ २७ ॥

नेत्रोत्सवः कान्तसमागतानां दावाग्नितुल्यः प्रियहीनितानाम् ।
तेनैव देहेन वराङ्गनानां चन्द्रोऽपि तावत्प्रियविप्रियश्च ॥ २८ ॥
विनापि चन्द्रेण पुरे पितुस्ते यतः प्रभा चन्द्रगभस्तिगौरी ।
गुणागुणांश्चन्द्रमसो न वेद्मि यतस्ततोऽहं प्रशंसयिष्ये ॥ २९ ॥
अवाप यो ब्राह्मणराज्यमीड्यो दुरापमन्यैः सुकृतैस्तपोभिः ।
गायन्ति विप्राः पवमानसंज्ञं समागताः पर्वणि चाप्युदारम् ॥ ३० ॥
पिता बुधस्योत्तरवीर्यकर्मा पुरूरवा यस्य सुतो नृदेवः ।
प्राणाग्निरीड्योऽग्निमजीजनद् यो नष्टं शमीगर्भभवं भयात्मा ॥ ३१ ॥
तथैव चक्रावरमे महात्मा पुरोर्वशीमप्सरसां वरिष्ठाम् ।
पीतः पुरा योऽमृतसर्वदेहो मुनिप्रवीरैर्वरगात्रि घोरैः ॥ ३२ ॥
नृपः कुशाग्रैः पुनरेव यश्च धीमानतोऽग्निर्दिवि पूज्यते च ।
आयुश्च वंशे नहुषश्च यस्य यो देवराजत्वमवाप धीरः ॥ ३३ ॥
देवातिदेवो भगवान् प्रसूतो वंशे हरिर्यत्र जगत्प्रणेता ।
भैमः प्रवीरः सुरकार्यहेतोर्यः सुभ्रु दक्षस्य सुतः सुताभिः ॥ ३४ ॥
बभूव राजाथ वसुश्च यस्य वंशे महात्मा शशिवंशदीपः ।
यश्चक्रवर्तित्वमवाप वीरः स्वैः कर्मभिः शक्रसमप्रभावः ॥ ३५ ॥
यदुश्च राजा शशिवंशमुख्यो योऽवाप महामधिराजभावम् ।
भोजाः कुले यस्य नराधिपस्य वीराः प्रसूताः सुरराजतुल्याः ॥ ३६ ॥
न कूटकृद् यस्य नृपोऽस्ति वंशे न नास्तिको नैष्कृतिकोऽपि वाम ।
अश्रद्दधानोऽप्यथवा कदर्यः शौर्येण वा वारिदवाचि हीनः ॥ ३७ ॥
वंशे यदूनां प्रभवायताऽपि श्लाघ्या गुणानामनिपातभूता ।
कुरु प्रणामं त्रिपुरामर्दन्ति तस्य स्वमीशस्य सतो प्रियस्य ॥ ३८ ॥
नारायणायाप्रमभावनाय लोकायनाय त्रिदशायनाय ।
खगेन्द्रकेतोः पुरुषोत्तमाय कुरु प्रणामं श्वशुराय देवि ॥ ३९ ॥

## षण्णवतितमोऽध्यायः

वैशम्पायन उवाच—

मखावसाने च मुने कश्यपस्यातितेजसः ।
जग्मुर्देवासुराः स्वानि स्थानान्यमितविक्रमाः ॥ १ ॥
वज्रनाभोऽपि निर्वृत्ते सत्रे कश्यपमभ्यगात् ।
त्रैलोक्यविजयाकाङ्क्षी तमुवाचाथ कश्यपः ॥ २ ॥

वज्रनाभ निबोध त्वं श्रोतव्यं यदि चेन्मम । वस वज्रपुरे पुत्र स्वजनेन समावृतः ॥

तपसाभ्यधिक शक्र शक्तश्चैव स्वभावत । ब्रह्मण्यश्च कृतज्ञश्च ज्येष्ठ श्रेष्ठतमो गुणै ॥
राजा कृत्स्नस्य जगत पात्रभूत सता गति ।
सम्प्राप्तो लोकराज्य स सर्वभूतहिते रत ॥ ५ ॥
नैव शक्यस्त्वया जातु वज्रनाभ विहन्यसे ।
अहि पदा व्युत्क्रमन् वै नचिराद् विनशिष्यसि ॥ ६ ॥
वज्रनाभश्च तद्वाक्य नाभिनन्दति भारत । कालपाशपरीताङ्गो मर्तुकाम इवौषधम् ॥
अभिवाद्य स दुर्बुद्धि कश्यप लोकभावनम् ।
त्रैलोक्यविजयारम्भे मति चक्रे दुरासद ॥ ८ ॥
ज्ञातियोधान् समानीय मित्राणि सुबहूनि च ।
प्रतस्थे स्वर्गमेवाग्रे विजिगीषन् विशाम्पते ॥ ९ ॥
एतस्मिन्नन्तरे देवौ कृष्णेन्द्रौ महाबलौ । प्रेषयामासतुर्हंसान् वज्रनाभवध प्रति ॥
समागतास्तु तच्छ्रुत्वा यदुसुरया महाबला ।
मन्त्रयित्वा महामानश्चिन्तामापेदिरे तथा ॥ ११ ॥
वज्रनाभोऽद्य हन्तव्य प्रद्युम्नेन यसशयम् ।
तयोर्दुहितरो भार्या भक्त्या ता सर्वभावना ॥ १२ ॥
सर्वा सगर्भास्ताश्चैव किं नु कार्यमनन्तरम् ।
प्राप्त प्रसवकालश्च तासा नातिचिरादिव ॥ १३ ॥
सम्मन्त्रयित्वैतदर्थं हसानूचुर्महाबला । आख्येयमर्थवत् कृत्व शक्रकेशवयोस्तदा ॥
हसैर्ग वा तदाख्यात देवयोस्तद् यथातथम् ।
ताभ्या हसास्तु सदिष्टा न भेतव्यमिति प्रभो ॥ १५ ॥
उत्पत्स्यन्ति गुणै श्लाघ्या पुत्रा व कामरूपिण ।
गर्भस्था सर्ववेदाश्च साङ्गान् वरस्यन्त्यनिन्दिता ॥ १६ ॥
तथा चानागत सर्वमस्त्राणि विविधानि च ।
सद्य एव युवानश्च भविष्यन्ति सुपण्डिता ॥ १७ ॥
एवमुक्त्वा गता हसा पुनर्वज्रपुर विभो । शशसुश्चैव भैमाना शक्रकेशवभाषितम् ॥
प्रभावती तदा पुत्र सुषुवे सदृश पितु । सद्यो यौवनसम्प्राप्त सर्वज्ञत्व च भारत ॥१९॥
मासमात्रेण सुषुवे दर्वा चन्द्रवती नृप । चन्द्रप्रभमिति ख्यात तनय सदृश पितु ॥
सद्यश्च यौवन प्राप्त सर्वज्ञत्व च भारत । गुणवत्यपि पुत्र च गुणवन्तमनिन्दिता ॥
युवानावथ सद्यस्तौ सर्वशास्त्रार्थकोविदौ । इन्द्रोपेन्द्रप्रसादेन सवृत्तौ युद्धवर्द्धनौ ॥
हर्म्यपृष्ठे वर्द्धमाना दृष्टास्ते यदुनन्दना । इन्द्रोपेन्द्रेच्छया वीर नान्यथेत्यवधार्यताम्॥
निवेदिताश्च सम्भ्रान्तर्दैत्यैराकाशरक्षिभि । वज्रनाभाय वीराय त्रिविष्टपजयैषिणे ॥
वधाय सर्वे गृह्यन्ता ममैते गृहधर्षका । इत्युवाचासुरपतिर्वज्रनाभो महासुर ॥२५॥
तत सैन्य समाज्ञप्तमसुरेन्द्रेण धीमता । आवारयामास दिश सर्वा कुरुकुलोद्वह ॥

ये गद चैव साम्ब च दैत्या समभिदुद्रुवु । ते ययुर्निधन सर्वे यादासीव महोदधौ ॥
विषम तु तदा युद्ध दृष्ट्वा देवपतिर्हरि । गदाय प्रेषयामास स्व रथ हरिवाहन ॥५२॥
दिदेश मातलिसुत यन्तार च सुवर्चसम् । साम्बायैरावण नाग प्रेषयामास चेश्वर ॥
जयन्त रौक्मिणेयस्य सहायमददाद् विभु । ऐरावणमधिष्ठातु प्रवर स नियुक्तवान् ॥
देवपुत्रद्विजौ वीरावप्रमेयपराक्रमौ । अनुज्ञाप्य सुराध्यक्ष ब्रह्माण लोकभावनम् ॥५५॥
स मातलिसुत चैव गजमैरावण तदा । देव प्रेषितवाञ्छक्रो विधिज्ञो वरकर्मसु ॥५६॥
क्षीणमस्य तपो वध्यो यदूनामेष दुर्मति । प्रवदन्ति तु भूतानि सर्वत्र तु यथेप्सितम् ॥
प्रद्युम्नश्च जयन्तश्च प्राप्तौ हर्म्यं महाबलौ । असुराञ्छरजालैर्घ्नन्तावभ्यन्तौ प्रणश्यतु ॥
गद कार्ष्णिस्ततोवाच दुर्वार्यरणदुर्जय । उपेन्द्रानुज शक्रेण रथोऽय प्रेषितस्तव ॥
हरियुङ्मातलिसुतो यन्ता चाय महाबल । प्रवराधिष्ठितश्चाय साम्बस्यैरावणो गज ॥
अथोपहारो वज्रस्य द्वारकाया महाबल । श्व पश्यति हृषीकेशस्तस्मिन् वृत्तेऽच्युतानुज ॥
तस्याज्ञया वधिष्यामो वज्रनाभ सबान्धवम् । अभ्युत्थानकृत पाप विनिष्टपनय मति ॥

करिष्यामि विधान तु नैष वज्र सुतान्वितम् ।
विनेन्द्रस्यप्रमादस्तु कर्तव्य इति मे मति ॥ ६३ ॥

कलत्ररक्षण कार्यं सर्वोपायैर्नरैर्बुधै । कलत्रधर्षण लोके मरणादतिरिच्यते ॥ ६४ ॥
एव सदिश्य भैम स गदसाम्बौ महाबल । प्रद्युम्नोऽथ ससृजे मायया दिव्यरूपया ॥
तमश्च नाशयामास दैत्यसृष्ट दुरासदम् । जहर्षे देवराजश्च त दृष्ट्वा रिपुमर्दनम् ॥६६॥
ददृशु सर्वभूतानि कार्ष्णि सर्वेषु शत्रुषु । अन्तरा मति वर्तन्त योनक्षमिन त विदु ॥
एव व्यतीता रजनी रौक्मिणेयस्य युध्यत । असुराणा त्रिभागश्च निहतश्चाततायिना ॥

यावद् वियोधयामास कार्ष्णिर्दैत्यान् रणाजिरे ।
सध्योपास्ता जयन्तेन तावद् विष्णुपदीजले ॥ ६९ ॥
अयोधयज्जयन्तश्च यावद् दैत्यान् महाबल ।
तावदाकाशगङ्गाया भैम सध्यामुपास्तवान् ॥ ७० ॥

## सप्तनवतितमोऽध्याय:

वैशम्पायन उवाच—

जगतश्चक्षुषि ततो मुहूर्ताभ्युदिते रवौ । प्रादुरासीद्धरिन्वस्तार्क्ष्येणोरगशत्रुणा ॥ १ ॥
हसवायुमनोभिश्च सुशीघ्रतरग खग । तस्थौ वियति शक्रस्य समीपे कुरुनन्दन ॥२॥

समेत्य च यथान्याय कृष्णो वासवमग्रिधा ।
पाञ्चजन्य हरिर्दध्मौ दस्यूना भयवर्द्धनम् ॥ ३ ॥

त श्रुत्वाभ्यागतस्तत्र प्रद्युम्नो परवीरहा । वज्रनाभ जहीत्युक्त केशवेन त्वरेति च ॥४॥
तार्क्ष्यमारुह्य गच्छेति पुनरेव प्रणोदित । चकार स तथा वीर प्रणिपत्य सुरोत्तमै ॥

स मनोरहसा वीर तार्क्ष्येणाशु ययौ नृप । अभ्याशं वज्रनाभस्य महाद्वन्द्वस्य भारत॥
ततस्तार्क्ष्यगतो वीरस्ततदं रणमूर्द्धनि । वज्रनाभं स्थिरो भूत्वा सर्वाखविद्‌निन्दित॥
तेन तार्क्ष्यगतेनैव गदया कृष्णसूनुना । उरस्यभ्याहतो वीरो वज्रनाभो महात्मना ॥
तेनाभिहितो वीरो दैत्यो मोहवशं गत । चचार च भृशं रक्तं यथासैव गतासुवत्॥
आश्वसेत्यथ त कार्ष्णिरुवाच रणदुर्जय । लब्धसंज्ञ स वीरस्तु प्रद्युम्नमिदमब्रवीत् ॥
साधु यादव वीर्येण श्लाघ्यो मम रिपुर्भवान् । प्रतिप्रहारकालोऽयं स्थिरो भव महाबल॥

एवमुक्त्वा महानाद मुक्त्वा मेघशतोपमम् ।
गदां मुमोच वेगेन सघण्टां बहुकण्टकाम् ॥ १२ ॥

तया ललाटेऽभिहत प्रद्युम्नो गदया नृप । उद्वमन् रुधिर भूरि मुमोह यदुनन्दन ॥

त दृष्ट्वा भगवान् कृष्ण पाञ्चजन्यं जलोद्भवम् ।
दध्मावाश्वासनकरं पुत्रस्य रिपुनाशन ॥ १४ ॥

त पाञ्चजन्यशब्देन प्रत्याश्वस्त महाबलम् । दृष्ट्वा प्रमुदिता लोका विशेषेणेन्द्रकेशवौ॥
तस्य चक्र करे याम कृष्णश्छन्देन भारत । क्षुरनेमिसहस्रार दैत्यसघकुलान्तकम् ॥

तन्मुमोचाच्युतसुतस्तस्य नाशाय भारत ।
नमस्कृत्वा सुरेन्द्राय कृष्णाय च महात्मने ॥ १७ ॥

वज्रनाभस्य तच्चक्रा पातयामास शिरस्तदा । नारायणसुतोऽमुष दैत्यानामनुपश्यताम् ॥
गद सुनाभमवधीद् यतमान रणाजिरे । हर्म्यपृष्ठे निपात्यन्ते रणशं भयानकम् ॥
साम्ब समरमध्यस्थानसुरानरिमर्दन । निनाय निशितैर्बाणै प्रेताधिपपरिग्रहम् ॥
निकुम्भोऽपि हते वीरे वज्रनाभे महासुरे । जगाम षट्पुरं वीरो नारायणभयार्दित ॥
निबर्हिते देवरिपौ वज्रनाभे महासुरे । अवतीर्णौ महात्मानौ हरी वज्रपुर तदा ॥
स्कन्धप्रशमन चैव चक्रतु सुरसत्तमौ । सान्त्वयामासतुश्चैव बालवृद्ध भयार्दितम् ॥

इन्द्रोपेन्द्रौ महात्मानौ मन्त्रविशा महाबलौ ।
आयत्यां च तदात्वे च बृहस्पतिमतानुगौ ॥ २४ ॥

वज्रनाभस्य तद् राज्य चतुर्धा चक्रतुर्नृप । विजयस्य चतुर्भागं जयन्ततनयस्य वै ॥
प्रद्युम्नस्य चतुर्भागं रौक्मिणेयसुतस्य च । चन्द्रप्रभस्य दत्तश्चतुर्भाग जनेश्वर ॥२१॥

कोट्यग्रतशो ग्रामाणामधिकान्ता विशाम्पते ।

नाम्नापुरमदद्यं च स्वर्गे वज्रपुरोपमम् । चतुर्धं चक्रतुस्तत्र भंरत्री शक्रकेशवौ ॥२०॥
कम्बलाजिनचर्माणि रत्नानि विविधानि च । चतुर्द्धा चक्रतुर्वीरौ वीर वासवकेशवौ ॥
ततोऽभिषिक्तास्ते वीरा राजानो वासवाज्ञया । देवदुन्दुभिघोषेण सुरविष्णुपुरस्कृतै ॥
स्वय शक्रेण देवेन केशवेन च धीमता । अभिषिक्ते महात्मान शक्रमाधवनन्दना ।
विजयस्य प्रसिद्धेय गतिर्विचलित धीमत । मानुषेण गुणेनापि माधवानो महात्मनाम् ॥

अभिषिच्य जयन्तं तु वासवो भगवान् प्रभुः ।
स्वपैत वीर सरस्या राजान समितिशायया ॥ ३२ ॥

मम वंशकरोऽत्रैकः केशवस्य त्रयोऽनघ। अवध्याः सर्वभूतानां भविष्यन्ति ममाज्ञया॥
गमनागमनं चैव दिवि सिद्धं भविष्यति।
त्रिविष्टपं द्वारकां च रम्यां भैमाभिरक्षिताम्॥ ३४॥
दिशाराजसुतान् नागान् हयांश्चोच्चैःश्रवोऽन्वयान्।
इच्छयैषां प्रयच्छस्व रथास्त्वष्टकृतानपि॥ ३५॥
गजावैरावणसुतौ शत्रुञ्जयरिपुञ्जयौ। प्रयच्छाकाशगौ वीर साम्बस्य च गदस्य च॥
आकाशेन पुरीं यातु द्वारकां भैमरक्षिताम्। आयातु च सुतौ द्रष्टुं यथेष्टं भैमनन्दनौ॥
इति संदिश्य भगवान् देवराजः पुरन्दरः। जगाम भगवान् स्वर्गं द्वारकामपि केशवः॥
षण्मासानुषितस्तत्र गदः प्रद्युम्न एव च। साम्बश्च द्वारकां याता रूढे राज्ये महाबलाः॥
अद्यापि तानि राज्यानि मेरोः पार्श्वे तथोत्तरे।
तिष्ठन्ति च जगद् यावत् स्थास्यन्त्यमरसंनिभ॥ ४०॥
निवृत्ते मौसले युद्धे स्वर्गं यातेषु वृष्णिषु। गदप्रद्युम्नसाम्बास्ते गता वज्रपुरं विभो॥
ततः प्रोष्य पुनर्यान्ति स्वर्गं स्वैः कर्मभिः शुभैः।
प्रसादेन च कृष्णस्य लोकस्तुर्जनेश्वर॥ ७३॥
प्रद्युम्नोत्तरमेतत् ते नृदेव कथितं मया। धन्यं यशस्यमायुष्यं शत्रुनाशनमेव च॥
पुत्रपौत्रा विवर्धन्ते आरोग्यधनसम्पदः। यशो विपुलमाप्नोति द्वैपायनवचो यथा॥

उपरि लिखित हरिवंश की कथा में जो थोड़ा बहुत परिवर्तन किया गया है उससे नाटक की रमणीयता बढ़ गई है यह बात निःसङ्कोच कही जा सकती है।

## प्रभावती परिणय की कथावस्तु

## ( १ )

पुराणों के अनुसार कश्यप की दो पत्नियाँ थीं १ दिति, २ अदिति। दिति से उत्पन्न दैत्य, तथा अदिति से उत्पन्न आदित्य-देव कहे गये। दोनों दल का सम्बन्ध वैमात्रेय का सम्बन्ध रहा। दैत्यों में वज्रनाभ तथा सुनाभ नाम के दो भाई बड़े वीर तथा प्रबल तपस्वी हो गये हैं। वज्रनाभ ने अपनी तपस्या से ब्रह्मा को प्रसन्न करके वरदान प्राप्त किया था कि उसकी नगरी 'वज्रपुर' में उसकी इच्छा के बिना किसी का प्रवेश नहीं हो सकता है। उसको ब्रह्मा ने यह भी वर दिया था कि उसे देवगण नहीं मार सकते हैं। एक समय की बात है वज्रनाभ ने मन्त्रणा करके अपने गुरु शुक्र को इन्द्र के पास सवाद कहने को भेजा। संवाद का स्वरूप यह था कि—'हे देवराज, यह समस्त संसार हम लोगों की पैतृक सम्पत्ति है, उचित है कि हम कश्यप के पुत्र उसका समान अंश प्राप्त करें। अतः आपने जितने दिनों तक स्वर्ग का भोग किया है, उतने दिनों तक अब मुझे स्वर्ग का भोग करने दें।'

।।। संवाद सुनकर इन्द्र तथा बृहस्पति चकित रह गये, उन लोगों ने मन्त्रणा करके उत्तर दिया कि वज्रनाभ का कहना उचित है, परन्तु न्यायानुसार पैतृक सम्पत्ति का विभाजन पिता की मृत्यु के बाद ही होना चाहिये, वह समय आवेगा तो वज्रनाभ का प्रस्ताव स्वीकृत होकर रहेगा। यदि इसमें कुछ आपत्ति हो तो वह पिताजी से पूछ लें। तदनुसार वज्रनाभ कश्यप के आश्रम में पहुँचा। कश्यप ने वज्रनाभ को समझा दिया कि हमारा द्वादश वार्षिक यज्ञ चल रहा है, उसके बाद आप लोगों के मनोरथ पूरे होंगे, इस वार्तालाप की सूचना इन्द्र को भी मिली, उन्होंने स्थिति की सूचना उपेन्द्र को दी। भगवान् तथा इन्द्र ने योजना बनाई। तदनुसार इन्द्र ने शुचिमुखी नामक हंसी के प्रधानत्व में एक हंस समुदाय को वज्र पुर में जाकर प्रभावती के हृदय में प्रद्युम्न के प्रति अनुराग उत्पन्न करने को कहा। शुचिमुखी ने वही किया। अनुराग के कारण प्रभावती का विरह बढ़ने लगा ( प्रथम अङ्क )।

( २ )

यथा क्रम में प्रभावती ने अपने पिता वज्रनाभ से कह दिया कि यह हंसी मनुरंजनपूर्ण देशान्तर वृत्तान्त सुनाने में निपुण है। इस पर कुतूहली दैत्यराज ने शुचिमुखी को वृत्तान्त सुनाने के लिये कहा। शुचिमुखी ने भद्रादि नटों के नाट्यकलाप की वर्णना द्वारा वज्रनाभ को इस प्रकार से आकृष्ट कर दिया कि—उसने भद्र आदि को बुला देने का अनुरोध कर दिया। शुचिमुखी की योजना सफल हो गई। ( द्वितीय अङ्क )।

( ३ )

योजनानुसार भद्र आदि नटों के साथ प्रद्युम्न, साम्ब, गद आदि यादव वीर नटवेष में शुचिमुखी के साथ आ गये। इन लोगों ने अपने अभिनय कौशल से वज्रनाभ को तथा उसकी रानियों को इतना आकृष्ट कर लिया कि उन लोगों ने प्रसन्न होकर बहुत सारे उपहार दिये। ( तृतीय अङ्क )।

( ४ )

वज्रपुर में प्रद्युम्न आदि के आ जाने पर शुचिमुखी के माध्यम से उनका प्रभावती के साथ पत्र व्यवहार होने लगा। एक दिन पुष्प के साथ भ्रमर रूप में प्रद्युम्न प्रभावती के अन्तःपुर में प्रवेश कर गये। प्रभावती के पास उनके द्वारा की गई छेड़छाड़ से प्रभावती के कोप पर शुचिमुखी ने विवर्ण माला में सूत्र ग्रथित किया। एक समय प्रभावती प्रद्युम्न का चित्र चित्रण करके अपना मन बहला रही थी, उसी समय तिरस्करिणी से प्रच्छन्न प्रद्युम्न वहीं उपस्थित हो गये, चित्र तथा प्रद्युम्न की छाया, दोनों में तुलना कर देखकर प्रभावती तथा सखियों के आश्चर्य का ठिकाना नहीं रहा। फलतः रूप में प्रद्युम्न को अन्तःपुर

में पाकर प्रभावती घबड़ा गई, शुचिमुखी के समझाने पर वह प्रकृतिस्थ हुई। दोनों का प्रच्छन्न मिलन हुआ। ( चतुर्थ अङ्क )।

( ५ )

परभृतिका आदि सखियों ने गद तथा साम्ब को भी चन्द्रावती एवं गुणवती के प्रणय में आबद्ध किया। वे दोनों वज्रनाभ के अनुज सुनाभ की कन्यायें तथा प्रभावती की बहिन के साथ सखियाँ थीं। उनके अनुराग को सफल बनाने के लिए योजना बनी कि उनको भी प्रद्युम्न द्वारा दी गई तिरस्करिणी के बल से अन्तःपुर में रखा जाय। तदनुसार गुप्त मार्ग से अन्धकार में गद तथा साम्ब को अन्तःपुर में पहुँचा दिया गया। ( पञ्चम अङ्क )।

( ६ )

एक रात प्रभावती ने सपना देखा कि उसके प्रिय प्रद्युम्न ने उसके पिता का वध कर दिया है। वह बहुत दुःखी हुई। उसकी सखियों ने उसे स्वप्न व्यर्थता के बारे में बहुत सी बातें कहीं, पर उसके हृदय को आश्वासन नहीं मिला। इस पर उसने स्वप्नदृष्ट अमङ्गल की शान्ति करने का विचार किया। तब तक वर्षा आ गई। प्रद्युम्न ने प्रभावती को अभयदान दिया कि जब तक तुम्हारे पिता द्वारा अन्तःपुर पर किसी प्रकार का अत्याचार नहीं किया जायेगा तब तक मैं उन पर अस्त्र नहीं उठाऊँगा, और बिना तुम से कहे मैं उन्हें नहीं मारूँगा। ( छठा अङ्क )।

( ७ )

धीरे धीरे वज्रनाभ पर यह बात खुल गई कि उसके कन्यान्तःपुर में शत्रुओं का प्रवेश हो गया है तथा उनके सम्पर्क में कन्यायें दूषित हुई हैं। इस पर कुपित होकर वज्रनाभ ने असुर सैन्य सजा कर अन्तःपुर पर धावा बोल दिया। फिर क्या था, प्रद्युम्न, साम्ब और गद ने अपनी वीरता दिखाई। सारे सैन्य के साथ वज्रनाभ तथा सुनाभ मारे गये। युद्ध में भगवान् को भी मदद करनी पड़ी। अन्त में प्रभावती के पुत्र तथा गुणवती-चन्द्रावती के पुत्रों को वहाँ का राज्य विभक्त कर बाँट दिया गया। ( सप्तम अङ्क )।

मूल कथा तथा प्रभावती परिणय की कथावस्तु पर दृष्टिपात करने से स्पष्ट हो जाता है कि परिवर्त्तन केवल नाम मात्र का है, वह भी इसी उद्देश्य से किया गया है कि चमत्कार बढ़े। भित्ति समान है, रङ्ग भर दूसरा है, वह भी इसीलिए कि चित्र साफ़ उभर सके।

## प्रभावती परिणय के प्रणेता

'प्रभावती परिणय' के रचयिता हरिहरोपाध्याय ने अपना परिचय स्वयं दे दिया है,

प्रभावती—( अनादृत्य ) हदासजीविद, एत्तिअं उण पत्थादुकामं तुमं पत्थेमि, तारिसं जम्मन्तर-परिग्गह करिस्ससि जहिं तस्स तिहुअण-विहूसणस्स सिरिरुप्पिणीसमुप्पण्णस्स मम्महजम्मणो वअणचन्दचन्दि-उज्जोअगोअरत्तणरमणोअजम्मलाह-सलाहणिज्जो होसि त्ति ( रोदिति )
(हताशजीवित, एतावत्पुनः प्रस्थातुकामं त्वां प्रत्याययामि, तादृशं जन्मान्तरपरिग्रहं करिष्यसि यत्र तस्य त्रिभुवन-विभूषणस्य श्रीरुक्मिणीसमुत्पन्नस्य मन्मथजन्मनो वदनचन्द्रचन्द्रिकोद्द्योतगोचरत्वरमणीयजन्मलाभ-श्लाघनीयं भविष्यसीति । )

कुमारः—अहो प्ररोहः प्रणयकातरतायाः, अहह !!

पतानि मरणप्रणयकातरभाषितानि
सन्तापजर्जरितजीवितनिःस्पृहाणि ।
आरोहयन्ति बहुमानमहार्घतायां
निर्मज्जयन्ति च मनः करुणासमुद्रे ॥ २९ ॥

प्रभावती—अहवा, किं त्ति असरणा विरज्जामि, तं ज्जेव मणोरह-सुलहं सलाहाविऊण उअलहामि, महाभाग, ( इति ध्यायन्ती ) ( अथवा, किमिति अशरणा विरज्यामि । तमेव मनोरथसुलभं श्लाघयित्वा उपालभे, महाभाग । )

इध सण्णिहिदोसि तुमं मह सुहम मणोरहेहि आहरिदो ।

---

प्रभावती—( शुचिमुखी की उक्ति का अनादर करके ) हे अभागे मेरे जीवन, जाने को उद्यत तुमसे मुझे इतना ही कहना है कि मैं तुम पर भरोसा करती हूँ, ऐसा जन्मान्तर ग्रहण करना, जिसमें त्रिभुवन भूषण कामावतार रुक्मिणी-पुत्र के मुखचन्द्र के प्रकाश मे रहने का अवसर पाकर अपना जीवन धन्य कर सको । ( रोती है )

कुमार—अहो, प्रणयकातरता पैदा हो रही है अहह ! इसके यह प्रणय-कातरता-भाषण सन्तप्त जीवन के प्रति वितृष्णा व्यक्त कर रहे हैं । यह भाषण सुन कर मैं अपने को आदरारूढ एवं करुणासागर मे निमग्न सा अनुभव कर रहा हूँ ॥ २९ ॥

प्रभावती—अथवा—मैं अशरण होकर क्यों विरक्त होऊं ? मनोरथसुलभ अपने प्रियतम को ही क्यों न प्रशंसापूर्ण उलाहना दूं ? ( सोचती हुई )

हे सुन्दर, मेरे मनोरथों द्वारा उपस्थित किये गये तुम यहाँ मेरे पास में वर्तमान

अह जइ पडिवअणम्मि वि परम्मुहो होसि किम्भणिमो ॥ ३० ॥

( इह सन्निहितोऽपि त्वं मम सुभग मनोरथैराहृत ।
अथ यदि प्रतिवचनेऽपि परमुखो भवसि किं भणामि ॥ ३० ॥ )

कुमार—अहो विरहोन्मादमेदुरेण प्रियतमाया प्रलापोपालम्भेनापि समीपतरवर्त्ती सापराधतया व्रीडीकृतोऽस्मि, तत्कुतो न प्रत्यक्षीभूय सम्भावयामि सुवदनाम्। ( इत्युपसर्पति )

तरलिका—( विलोक्य, ससम्भ्रममुत्थाय सव्रीडस्मितम् ) भट्टिदारिए पलोएसि परावुत्तो एस महुअरो। ( भर्तृदारिके प्रलोकयसि परावृत्त एष मधुकर। )

प्रभावती—( सचमत्कारमीक्षते )

कुमार—( अपवार्य )

चकितचकितमुग्धं कौतुकोत्तानमस्या
मधुप इति वयस्यावाचि साचिस्मितायाम्।
समुदयति समन्तात्कौतुकोन्मज्जदच्छ
कुवलयदलदामश्यामला लोचनश्री ॥ ३१ ॥

---

हो फिर भी यदि तुम उत्तर देने से भी विमुख हो तो मैं तुम्हें क्या कहूँ सकती हूँ ॥ ३० ॥

कुमार—अहा, विरहजन्य उन्माद से भरे हुए प्रेयसी के इन प्रलापोपालम्भ से समीपवर्ती मैं अपराध का पात्र बनाया जा रहा हूँ फिर क्यों न मैं प्रत्यक्ष होकर सुन्दरी को आश्वासन प्रदान करूँ ? ( समीप जाता है )

तरलिका—( देखकर घबड़ाहट से उठकर लज्जा तथा मुस्कुराहट के साथ ) राजकुमारी, देखो यह भ्रमर लौट आया है।

प्रभावती—( चमत्कृत होकर देखती है )

कुमार—( छिपकर ) चकित, कौतुक से उत्तान, इसकी दृष्टि सखी के वचन पर चारों ओर कुवलय की माला की तरह चल रही है ॥ ३१ ॥

( प्रकाशम् ) अयि प्रियतमे, किमपीदमपरिकलितपरावस्थाविधुरमुपालम्भोऽस्मि ।

कतिधा न मनोरथोपनीता
प्रणिपातैर्गमितानुकूलताम् ।
विधृताऽथ विधूतशङ्कमङ्के
मधुरामाषिणि भाषिता त्वमासीः ॥ ३२ ॥

प्रभावती—( ससम्भ्रमोत्कम्पमुत्तिष्ठन्ती ) अहो अच्चाहिदं अन्तेउरम्मि । ( अहो अत्याहितमन्तःपुरे । )

कुमारः—( सप्रतिषेधम् )

तन्वी तनुं गुरुपयोधरभारभुग्ना
मायासितामथ वियोगपराभवेन ।
त्रासाय खेदकलुषीकुरुषे यदेव-
मत्याहितं सुतनु केवलमेतदेव ॥ ३३ ॥

प्रभावती—( सोत्कम्पकातरम् ) हा ताद, को उआओ । ( हा तात, क उपायः । )

शुचिमुखी—भर्तृदारिके, किमेतत् ?

---

( प्रकट ) हे प्रियतमे, तुम दूसरे की अवस्था की कल्पना किये बिना ही यह उलाहना दे रही हो,

मैंने अनेक बार तुमको मनोरथ द्वारा समीप बुलाकर, और चरणों पर गिर कर अनुकूल बनाकर, निःशङ्क भाव से गोद में बैठाकर, तुमसे बातें की हैं ॥

प्रभावती—( घबड़ाहट से उठती हुई तथा कांपती हुई ) अहा, अन्तःपुर में महाभय उपस्थित हुआ है ।

कुमार—( रोकते हुए )

स्तन के भार से झुकी एवं वियोग-व्यथा से आयासित दुर्बल देह को उसने से जो तुम खिन्न कर रही हो, हे सुन्दरि, केवल यही महाभय है ॥ ३३ ॥

प्रभावती—( कांपती हुई कातर भाव से ) हाय पिताजी क्या उपाय है ?

शुचिमुखी—राजकुमारी, यह क्या ?

यस्मिन् दूरदिगन्तवर्त्तिनि मनोवृत्तिस्तवाभूत्तथा
तस्मै दुःसहमन्मथाकुलतया नीतास्त्वया वासराः ।
निर्मोक्तुं बहुवारशस्तिवती त्वं यत्कृते जीवितं
सोऽयं साहसिकः स्वयं सखि तव स्नेहादिहाभ्यागतः ॥ ३४ ॥

अपि च—

भूत्वा पीयूषांशुवंशैकवीरः
कृत्वा कुत्साकारिशैलूषवेषम् ।
सूनुः साक्षात्पुण्डरीकाक्षलक्ष्म्योः
किञ्च प्राप्तस्त्वामयं पञ्चबाणः ॥ ३५ ॥

तरलिका—सहि, सच्चं सुइमुहीए उआहरीअदि । ता किंत्ति सम्पत्तजम्मलाहफलं अत्ताणं णाहिणन्दसि । ( सखि, सत्यं शुचिमुख्या उदाह्रियते तद् किमिति सम्प्राप्तजन्मलाभफलम् आत्मानं नाभिनन्दसि ? )

प्रभावती—( सास्रम् ) किं करेमि अत्तणो असाहीणा । ( किं करोमि आत्मनोऽस्वाधीना । )

---

जिसके दूरस्थित रहने पर तुम्हारी वैसी मनोदशा थी, जिसके लिये कामातुर होकर तुम दिन बिताया करती थी, जिसके बिना तुमने कई बार जीवन त्यागने का निश्चय कर लिया था वही यह साहसी वीर तुम्हारे स्नेहवश यहाँ स्वयं उपस्थित हुए हैं ॥ ३४ ॥

और—चन्द्रवंशी वीर होकर भी निन्दनीय नटवेष धारण करके यह लक्ष्मी तथा नारायण के पुत्र साक्षात् कामदेव तुम्हारे पास उपस्थित हुए हैं ॥ ३५ ॥

तरलिका—सखि शुचिमुखी ठीक ही कह रही है, तुमको जीवनधारण करने का फल प्राप्त हो गया है, तुम क्यों नहीं अपने को बड़भागी मानती हो ।

प्रभावती—( रोकर ) मैं पराधीना कन्या करूं क्या ?

शुचिमुखी—अपि, स्वाधीना एव स्वयंवराः कुलकुमार्यः।

किञ्चात्र—

पुरा पराधीनतया स्थितायाः
मनोऽनुरागं मुनिकन्यकायाः।
निदर्शनत्वेन शकुन्तलाया
दुष्यन्तपाणिग्रहणं गृहाण ॥ ३६ ॥

प्रभावती—( निःश्वस्य परावृत्य तरलिकामीक्षते )

तरलिका—महाभाअ, भट्टिदारिआ विण्णवेदि एदं विचित्तमणि-सिलावेदि-अक्कदेसमलकरेदु कुमारो। ( महाभाग, भर्तृदारिका विज्ञापयति एवं विचित्रमणिशिलावेदिकैकदेशम् अलङ्करोतु कुमारः। )

कुमार —( प्रभावतीं प्रति ) अयि प्रियतमे,

मयि चेन्मदनकलमालसे त्वं
सुकृतैः स्नेहवति प्रसीदसि।
इह शैवलशीतले निवेशं
शयनीयेऽप्यनुमन्तुमर्हसि ॥ ३७ ॥

( इति प्रभावत्या मुखमवलोकयंस्तिष्ठति )

---

शुचिमुखी—अरी, कुलकन्यायें स्वयंवरा होने से सदा स्वाधीना ही होती हैं। इस विषय में—

पराधीनभाव से अवस्थित मुनिकन्या शकुन्तला के मनोनुराग तथा दुष्यन्त के साथ विवाह को ही दृष्टान्त समझ लो ॥ ३६ ॥

प्रभावती—( निःश्वास लेकर उलट कर तरलिका की ओर देखती है )

तरलिका—महाभाग, राजकुमारी कह रही हैं कि आप इस विचित्र मणिशिला-वेदिका के एक भाग में बैठें।

कुमार—( प्रभावती के प्रति ) हे प्रियतमे,

कामपीडित मुझ पर यदि तुम मेरे पुण्यों से प्रसन्नता प्रकट करना चाहती हो तो इस शैवल-शीतल शयन पर भी बैठने को अनुमति-प्रदान कर सकती हो ॥ ३७ ॥

( ऐसा कहकर प्रभावती का मुख देखता रहता है )

शुचिमुखी—( विलोक्य, आत्मगतम् )

प्रियेक्षितायाः प्रतिनेत्रपात-
त्रपामरैर्दूरमपाकृतोऽस्याः ।
रोमाङ्कुरोऽम्भोजविलोचनायाः
कपोलयोः केन निवारणीयः ॥ ३८

( प्रकाशम् । सस्मितम् ) महाभाग,

हृदये सुचिरं मृगीदृशोऽस्या
ननु कस्यानुमते त्वमासितोऽभूः ।
अधुना शयनान्तमासितुं त्वा-
मनुमन्तुं कतमा प्रभावती स्यात् ॥ ३९ ॥

प्रभावती—( सासूयं शुचिमुखीमीक्षते )

कुमारः—( सप्रश्रयम् ) तदहमस्मिन् परिजनोचिते शैवलशयनोपान्ते समुपविशामि । ( इत्युपविशति )

तरलिका—( प्रभावतीं हस्ते गृहीत्वोपवेशयति )

---

शुचिमुखी—( देखकर, स्वगत )

प्रियतम द्वारा देखे जाने पर इसने लज्जावश उसकी तरफ देखना तो छोड दिया है, परन्तु इसके कपोल पर जो रोमाञ्च खडे हो रहे हैं उन्हे कौन दूर करे ॥ ३८ ॥

( प्रकट ) ( हँसकर ) महाभाग,

इस मृगनयनी के हृदय म चिरकाल से तुम किस की अनुमति लेकर बैठे रहे हो, फिर इस समय शयन के एक भाग मे बैठने की अनुमति देने मे प्रभावती कौन होती है ॥ ३९ ॥

प्रभावती—( असूया से शुचिमुखी की ओर देखती है )

कुमार—( नम्रतापूर्वक ) तो मैं इस परिजन के बैठने योग्य शैवल शयन के समीप मे बैठता हूं । ( बैठ जाते हैं )

तरलिका—( प्रभावती का हाथ पकड कर उसे बैठाती है )

प्रभावती—( किञ्चित्तिर्यगुपविश्य शृङ्गारलज्जां नाटयन्ती आत्मगतम् )

पावो हि दीहदीहं णअणाणि मोसाइं दाणि दीसअसु ।
लज्जाइ मा खु मीलसु हरिज्जन्तमप्पाणं ॥ ४० ॥

( पापो हि दीर्घदीर्घं नयनानि मोषयित्वा इदानीं दृश्यसे ।
लज्जया मा खलु मीलय हरन्तमात्मानम् ॥ ४० ॥ )

( इति तिर्यगवलोकते )

कुमार —( अपवार्य )

नैषोपैति प्रणयवचनं साध्वसादास्यमस्याः
स्निग्धाकूतप्रसरमधुरा नाधरान्ते स्मितश्रीः ।
किञ्चिन्न्यञ्चत् कुवलयदलश्रेणिसन्दोहवाही
व्रीडावक्रः परमुदयति स्नेहसाक्षी कटाक्षः ॥ ४१ ॥

( नेपथ्ये )

भो भो रङ्गसन्निधानाधिकारिणः पुरुषाः, स्वयमेव महाराजः समाज्ञापयति सम्पाद्यन्तां रङ्गसन्निधानानि, समाहूयन्तां शैलूषाः ।

---

प्रभावती—( थोड़ा सा वक्र होकर बैठकर काम लज्जा का अभिनय करती हुई स्वगत )

पापी चिरकाल तक नयन चुराते रहे, आज दीख पड़े हो, अब लज्जा से अपने को छिपाओ मत ॥ ४० ॥

( ऐसा कहकर कनखी से देखती है )

कुमार—( छिपाकर )

इसका मुख प्रीतिवचन नहीं कह रहा है, न इसके चेहरे पर स्निग्ध अभिप्राय से भरी मुस्कुराहट देखने को मिल रही है, परन्तु कुछ-कुछ वक्र नीलकमलश्रेणी का वहन करनेवाली लज्जा से वक्र तथा प्रणयसूचक कटाक्ष उदित हुआ करता है ॥ ४१ ॥

( नेपथ्य में )

हे रङ्ग की तैयारी करने में नियुक्तजन, स्वयं महाराज आप लोगों को आदेश दे रहे हैं, कि आप रङ्ग को सजा दें और नटों को बुला दें ।

प्रभावती—( आकर्ण्य सविषादम् ) कधं झत्ति एदम्पि उअत्थिद् । ( कथ झटिति एतदप्युपस्थितम् । )

कुमार—अयि प्रियतमे, किमसम्भावितविप्रलम्भकातरासि ?

मया मायामवस्थाय कयापिच्छाययात्मन ।
वञ्चितेषु चिरस्नेषु विप्रयोग- प्रिये कुत' ? ॥ ४२ ॥

शुचिमुखी—( पक्षौ वितत्य ) किमियमागतैवास्माक विहङ्गमाना वाग्व्यापारान्यायो विभावरी, तदनुजानातु मा कुलायनोपाय कुमारो भर्तृदारिका च ।

तरलिका—महाभागोवि सम्पद सुसण्णिहिदसअलपाणिग्गहमङ्गलोवआररमणीअ पल्लङ्किआमन्दिरं गदुअ अलङ्करेदु । ( महाभागोऽपि साम्प्रत सुसन्निहितसकलपाणिग्रहोपचाररमणीय पर्यङ्किकामन्दिर गत्वाऽलङ्करोतु । )

कुमार —यदादेशयति भवती । ( इति सर्वे समुत्तिष्ठन्ति )

कुमार —( प्रभावतीं पाणौ गृह्णाति )

---

प्रभावती—( सविषाद, स्वगत ) क्यों, शीघ्र ही यह भी उपस्थित हो गया ?

कुमार—हे प्रियतमे, असम्भावित वियोग से तुम क्यों कातर हो रही हो ?

मैं माया का विस्तार कर के अपनी किसी छाया से उन्हे चिरकाल तक ठगता रहूँगा, प्रिय, वियोग कैसे होगा ? ॥ ४२ ॥

शुचिमुखी—( पक्ष फैलाकर ) हम पक्षियों को चुप्पी धारण करवाने वाली रात उपस्थित हो गई, अत कुमार मुझे अपने घोसले में जाने की अनुमति प्रदान करें ।

तरलिका—महाभाग भी इस समय वैवाहिक उपकरणों से रमणीय पर्यङ्किका मन्दिर म चल कर अलङ्कृत करें ।

कुमार—आप को जैसी आज्ञा । ( सभी उठते हैं )

कुमार—( प्रभावती का हाथ पकडते हैं )

प्रभावती—( सव्रीडमुत्कम्पते )

कुमार—( सानन्दम् ) अहह !!

मया लब्धं लोके फलमखिलमद्यैव जनुषः
किमन्यत्पुण्यानामियमजनि धन्या परिणतिः ।
नकारस्याहारप्रतिनिधिरिहाकर्णि सुतनो-
र्घनोत्कम्पान्दोलैर्यदि कलरवः कङ्कणभवः ॥ ४३ ॥

अहो स्पर्श !

किं कर्पूरपटीरपङ्कतटिनीस्रोतोविहारश्रमैः
किं सद्यः स्रवदच्छसीकरकलानाथोपलालिङ्गनैः ।
चेदालम्बि चिराद्वयं वरतनोर्बालावधूतापलत्
पीयूषद्रवसिक्तरक्तकमलक्रोडानुकारः करः ॥ ४४ ॥

तरलिका—इदो इदो एदु कुमारो भट्टिदारिआ च । ( [illegible] इत एतु कुमारो भर्तृदारिका च । )

( इति सर्वे परिक्रामन्ति )

---

प्रभावती—( लज्जा से काँप उठती है )

कुमार—( सानन्द ) अहह !!

मैंने अपने जन्म ग्रहण करने का समस्त फल आज ही पा लिया, और क्या कहूँ मेरे समस्त पुण्यों की यह परिणति धन्य है कि इस सुन्दरी के कङ्कण का कलरव कम्पन से आन्दोलित हो कर नकार के प्रतिनिधि रूप में सुनने को मिल गया ॥ ४३ ॥

अहो, कैसा यह स्पर्श है !

कर्पूर तथा चन्दन की नदी में विहार करने के परिश्रम का क्या फल है ? स्रवने वाले स्वच्छ चन्द्रकान्त खण्ड के आलिङ्गन से क्या लाभ है, यदि इस सुन्दरी के हवा से चलित अमृतसिक्त रक्तकमलतुल्य हाथ का आलम्बन कर लिया ॥ ४४ ॥

तरलिका—कुमार, भर्तृदारिका, आप इधर चलें ।

( सभी चलते हैं )

कुमारः—अहो दुस्तरेयमस्तव्यस्तता, तथा हि—

स्वेदेनोच्छलतातिपिच्छिलतरा भूयः करादङ्गुली
स्रस्ताग्रस्तकुरङ्गशावकदृशः कष्टादवष्टभ्यते ।
पश्चान्मन्थरसञ्चरत्सुवदनासम्पर्कलुब्धात्मना
गन्तुं हन्त पदात्पदान्तरमपि क्व प्राप्यते पौरुषम् ॥ ४५ ॥

( इति निष्क्रान्ताः सर्वे )

इति मायामधुव्रतो नाम चतुर्थोऽङ्कः



---

कुमार—अहो, यह अस्तव्यस्तता दुस्तर है, क्योंकि-बहते हुए पसीने के कारण फिसलती हुई कुरङ्गनयना की यह अङ्गुली कठिनाई से अवलम्बित हो रही है, पीछे पीछे चलती हुई इस सुन्दरी के सम्पर्क के लिये लुब्ध होने के कारण मुझ में वह पौरुष कहाँ है कि मैं एक पग भी चलूँ ॥ ४५ ॥

( सभी चले जाते हैं )

मायामधुव्रतनामक चतुर्थ अङ्क समाप्त



## पञ्चमोऽङ्कः

( ततः प्रविशति भटः )

भटः—( सबहुमानम् ) अहो गुणानुरागो दनुजराजस्य, तथाहि तेषु तेषु गङ्गावतरणाद्युद्गीयमानगान्धारादिग्रामभेदेषु घनसुषिरततानद्ध-वादित्र-निवाद्यमानलयतालविशेषेषु शङ्करशरासनारोपण-रम्भाभिसरणा-दिनाटकाभिनयभूमिकादिषु च प्रसादीकृतैव क्रमेणास्मासु तेनानुरञ्जिता राज्यलक्ष्मीः । अथवा—

पुरतः पुरमेव सावरोधं
विधुरेभ्यो मधुरं समर्पयन्त्या ।
भवितव्यतया कयाचिदेषा
असुराणामपहारिता गृहश्रीः ॥ १ ॥

( साशङ्कम् ) अपि नाम लघूकरिष्यत्यस्माकं व्यापारं भगवान्,

अथवा—

प्रद्युम्नः परिणीय दानवसुतामन्तःपुरान्तश्चिर-
दास्ते वज्रपुरावरोधवनिता लक्षैरलक्षितः ।

---

( भट का प्रवेश )

भट—( आदरपूर्वक ) दनुजराज का गुणानुराग आश्चर्यजनक है। देखिये—गङ्गावतरण आदि गीत के स्वरग्राम, घन, सुषिर आदि तालभेद, एवं शङ्कर-शरारोपण, रम्भाभिसरण आदि नाटकों के अभिनय पर उन्होंने प्रसन्न हो कर सारी राज्यलक्ष्मी हम लोगों को उपहार में दे दी है। अथवा—पहले से ही अन्तःपुर सहित समस्त नगर को मधुर भाव से कुमारों को अर्पित करने वाली भवितव्यता ने असुरों की समस्त सम्पत्ति छीन ली है ॥ १ ॥

( आशङ्का भरे स्वर में ) क्या भगवान् हमारे कार्य को आसान करेंगे? अथवा—

प्रद्युम्न दानवराजकुमारी के साथ विवाह कर के वज्रपुर के अन्तःपुर में वहाँ की लाखों-लाख स्त्रियों से अलक्षित हो कर वास कर रहे हैं, अब

प्रकान्तः पुनरेष शाम्बगदयोः पाणिग्रहश्चेद् भवेद्
दैत्योन्मूलनमूलमूलमितरत्कृत्यं किमात्यन्तिकम् ॥ २ ॥

तत्सम्प्रत्येव सञ्ज्ञापितोऽस्मि शुचिमुख्या यदिदमेव दक्षिणोद्यानमागता तरलिकेति तद्गत्वाऽवगच्छामि वृत्तान्तमन्तःपुरस्य। (इति परिक्रम्य उद्यानप्रवेशं नाटयित्वा) किमियमत्र तरलिकैव रसालमञ्जरीपल्लवानुच्चिनोति। (प्रविश्य। यथानिर्दिष्टा)

तरलिका—(पुरोऽवलोक्य) कधं एस भद्दो। (कथमेष भद्रः।)

भद्र—(उपसृत्य नीचैः) सखि तरलिके, कुतः चिताय मञ्जरीपल्लवापुच्चय ?

तरलिका—अज्ज वसन्दूसवो त्ति पिअसहीए मम्महाराहणोवअरणाइं उअहरीअन्ति। (अद्य वसन्तोत्सव इति प्रियसख्या मन्मथाराधनोपकरणानि उपह्रियन्ते।)

भद्र—(विहस्य)

उपहर्रसि रसालमञ्जरीं किं
किमपचितैरथवा तव प्रवालैः।

---

यदि गद तथा साम्ब का यह प्रकान्त विवाह भी सम्पन्न हो जाता है, तो फिर राक्षसों के विनाश का मूलभूत कार्य ही क्या शेष रहेगा ॥ २ ॥

अभी अभी शुचिमुखी ने सूचना दी है कि तरलिका इसी दक्षिणोद्यान में आई हुई है, अतः जाकर पता लगाता हूँ कि अन्तःपुर का क्या समाचार है ? (चलकर उद्यानप्रवेश का अनुभव करता हुआ) क्यो, यही पर तरलिका आम की मञ्जरी तथा पत्ते चुन रही है। (प्रवेश करके पूर्वोक्त रूप मे)

तरलिका—(आगे की ओर देख कर) क्यों, यह भद्र है ?

भद्र—(समीप जाकर मन्द स्वर मे) सखि तरलिके, यह आम्रमञ्जरी तथा पल्लवो का चयन क्यो किया जा रहा है ?

तरलिका—आज वसन्तोत्सव है, प्रियसखी के लिये मन्मथाराधन के उपकरण जुटा रही हूँ।

भद्र—(हँसकर) आम्रमञ्जरी क्यो ले जा रही हो, और प्रवालो के

भद्रः—( सानन्दम् ) कथय कथय कथमेतत् ?

तरलिका—अज्ज कुमारेण परहुदिअं वाराविअ दुए विगदसम्बा अन्तेउरम्मि णेअव्वा । तहिं तए चन्दवदीए गदो गुणवदीए सम्बो संजोजइदव्वो । ( अद्य कुमारेण परभृतिका द्वारीकृत्य द्वावपि गदशाम्बौ अन्तःपुरं नेतव्यौ । तदा तत्र चन्द्रवत्या गदगुणवत्या साम्बः संयोजयितव्यः । )

भद्रः—( सोपालम्भमिव स्मित्वा ) सोऽयं भवतीनामारण्यगजग्रहन्यायः—

> एकः पुरः प्रयत्नात् परिचयमुपनीयते करी कुशलः ।
> करिणस्तेनारण्याद्न्येऽपि निबध्य नीयन्ते ॥ ५ ॥

तरलिका—( नासिकायामङ्गुलिं न्यस्यन्ती ) अम्महे विवरिदो एस पज्जणुओओ । ( अहो, विपरीत एष पर्यनुयोगः । )

भद्र—( विहस्य ) उभयथापि जितमस्माभिः । तत्कथय कथमयं परिणतो दूतीकल्पः ।

तरलिका—आअक्खिदज्जेव केत्तिअपि कुमाराणं परहुदिआए । ( आख्यातमेव कतिधा कुमाराणां परभृतिकया । )

---

भद्र—( सानन्द ) कहो कहो, क्या बात है ?

तरलिका—आज कुमार परभृतिका के द्वारा गद तथा शाम्ब दोनों कुमारों को अन्तःपुर में बुला लेंगे, फिर वहाँ पर चन्द्रवती के साथ गद को और गुणवती के साथ शाम्ब को संयुक्त करावेंगे ।

भद्र—( उलाहने के से स्वर में ) यह रहा आप लोगों का वन्य हाथियों को फँसाने का तरीका ।

पहले एक हाथी कोशिश कर के परिचित कर लिया जाता है, फिर उसी के द्वारा अन्य हाथियों को भी जंगल से लाकर बाँध लिया जाता है ॥ ५ ॥

तरलिका—( नाक पर अंगुली रखती हुई )

अहा, यह तो उल्टा ही प्रश्न है ।

भद्र—( हँसकर ) दोनों ही स्थिति में जीत हमारी ही है, अच्छा, यह बताओ कि यह दूतीकल्प सिद्ध कैसे हुआ ?

तरलिका—परभृतिका ने तो कई बार कुमारों से कहा ही था ।

भद्र—हुं, आख्यातमेकदा गदशाम्बयोः समीपमुपेतया निभृत-मेतया—

विमलं युवयोः कुलं वयो वा
विनयो वाऽथ पराक्रमक्रमो वा ।
सुदृशोः श्रुतिमेत्य नित्यशो यदु-
वडिशोत्क्षिप्तमिवाचरन्ति चेतः ॥ ६ ॥

तरलिका—किं एत्तिअं पहावदीए तहाविहविरहवेअणक्कमं अदिक्कमिअ वहन्ति भट्टिदारिआओ चन्दवदीगुणवदीओ । ( किमेतत् प्रभावत्यास्तथाविधविरहवेदनाक्रममतिक्रम्य वहतो भर्तृदारिके चन्द्रवतीगुणवत्यौ । )

भद्रः—ततस्ततः ।

तरलिका—अहं अज्ज पहादसमअम्मि सुहसऊणववदेसेण विरहोवआरे सुवहन्तीणं ताण समीवं गदा आसि तत्थ उण पढमोरत्ता ज्जेव परहुदिआए वीसम्भणिब्भर आअक्खिदा । ( अहमद्य प्रभातसमये सुखशकुनव्यपदेशेन विरहोपचारे सुवहन्तीनां तासां समीपं गताऽऽसम् तत्र पुनः प्रथमोपरक्तया एव परभृतिकया विस्रम्भनिर्भरमाख्याता । )

---

भद्र—हां, एक बार परभृतिका ने गद तथा शाम्ब के समीप जा कर चुपके से कहा था कि :—

आप दोनों आदमियों के कुल, वय, विनय, तथा पराक्रम नित्य हमारी चन्द्रवती तथा गुणवती नामक सखियों के कानों में पहुँच कर उनके हृदयों को वंशी में फंसा कर खींच से रहे हैं ।। ६ ।।

तरलिका—क्या इतनी ही बात है ?

प्रभावती की विरहवेदना से भी बढ़ कर वेदना का अनुभव कर रही हैं राजकुमारी चन्द्रवती और गुणवती ।

भद्र—उसके बाद ?

तरलिका—आज प्रात काल में कुशलप्रश्न के निमित्त उनके समीप गई, वे विरहोपचार में व्यस्त थीं, वहां जाने पर पहले से ही तैयार बैठी परभृतिका ने मुझसे कहा ।

भद्रः—( सकौतुकम् ) किमाख्यातासि परभृतिकया ?

तरलिका—पिअसहि, पहावदीए पिअसहि त्ति अम्ह भट्टिदारिआणं बहिणिआ पिअसही वि तुमं तदो जइ तुम्हाहिं वि अब्भन्तरं मम्महवेअणा निक्कमणिक्कमन्तजीविदाओ एदाओवि पहावदीसरिच्छं जीआविदुं पारिअन्ति ता दंसेव पक्खवादं करेध पसादं त्ति। ( प्रियसखि, प्रभावत्या प्रियसख्यसि अस्माकं भर्तृदारिकयोर्भगिनिका प्रियसख्यपि त्वं ततो यदि त्वमपि अभ्यन्तरमन्मथवेदनातिक्रमनिष्क्रामज्जीवितयोरेतयोरपि प्रभावतीसदृशं जीवितुं पारयसि तद् दर्शय पक्षपातं कुरुष्व प्रसादमिति। )

भद्रः—ततस्ततः।

तरलिका—तदो मए जइ बहिआणं सिणेहेण पहावदी ज्जेव एवंकरेदि जदो ताए पुरा आराहिएण दुव्वासामहेसिणा पसण्णेण पसादीकदा सा कावि विज्जा जाए पच्चक्खीभोदि भअवं बम्हहो तेण उण जहेच्छिद जणोपसादीकरीअदि त्ति भणिदं। ( ततो मया यदि भगिन्योः स्नेहेन प्रभावती एव एवं करोति यतस्तया पुराऽऽराधितेन दुर्वाससा महर्षिणा प्रसन्नेन प्रसादीकृता सा कापि विद्यायया प्रत्यक्षीभवति भगवान् ब्रह्मा, तेन पुनः यथेप्सित-जनः प्रसादीक्रियत इति भणितम्। )

---

भद्र—( कौतुक से ) परभृतिका ने तुमसे क्या कहा ?

तरलिका—( परभृतिका ने मुझसे कहा कि ) प्रिय सखि, तुम प्रभावती की प्रिय सखी हो, इसीलिये राजकुमारी चन्द्रवती और गुणवती की भी बहन सखी हो, अब यदि तुम भी आन्तरिक कामवेदना से म्रियमाण-दशा को प्राप्त इन दोनों के लिये प्रभावती की तरह ही जीवन का उपाय कर सको तो कृपा करो तथा अपना स्नेह दिखलाओ—

भद्र—इसके बाद ?

तरलिका—इसके बाद मैंने कहा कि बहनों के स्नेह से चाहे तो प्रभावती ही ऐसा कर सकती है, क्यों कि पूर्वकाल में आराधना से प्रसन्न होकर महर्षि दुर्वासा ने उसे कुछ ऐसी सिद्धि दी है जिससे ब्रह्मा प्रत्यक्ष होते हैं, फिर वह अभिलषित पुरुष से भेंट कराने की कृपा करते हैं।

भद्र—ततस्तत ।

तरलिका—तदो अच्छरीअ विसठ्ठुलुक्कठापरवसाहिं ताहिं णिब्भरावेसमत्थिआए मए तदो आअच्छिअ सुहसउणववदेसेण ज्जेव पच्छण्ण सरीरेण कुमारपज्जुण्णेण सम भट्टिदारिआ तहि ज्जेव णीदा। (तत आश्चर्यविसष्ठुलोत्कण्ठापरवशयोस्तयोर्निर्भरावेशमथितया मया तत्र आगत्य सुखशकुनव्यपदेशेन एव प्रच्छन्नशरीरेण कुमारप्रद्युम्नेन सम भर्तृदारिका तत्रैव नीता।)

भद्र—तत ।

तरलिका—तदो ताण सन्तावसन्तदाइ सरीरावत्थतराइ करुणगग्गदक्खर उआहरन्तीए मए परहुदिआए अग्गदो भट्टिदारिए पेक्ख पेक्ख एदाण बहिणिआण णिरन्तरविरहुव्वेअवेअणा विसूरन्तजीविद अप्पदीआर अवत्थन्तर दाणिम्पि कीस णिरणुक्कोसासि त्ति उआलहिअ भट्टिदारिअ महाप्पहावत्तेण पविठठा विअ मग्गदा ताण मणोरहवल्लहा। (ततस्तयो सन्तापसन्ततानि शरीरावस्थान्तराणि करुणगद्गदाक्षरमुदाहरन्त्या मया परभृतिकाया अग्रतो भर्तृदारिके, पश्य पश्य एतयोर्भगिन्यो निरन्तरविरहोद्वेगवेदना विलश्यमानजीवितमप्रतीकारमवस्थान्तरम्, इदानी

---

भद्र—उसके बाद ?

तरलिका—इसके बाद आश्चर्य तथा उत्कण्ठा से पराधीन होकर कष्ट उठाने वाली राजकुमारियो की एकान्त व्यथा से पीडित हो कर मैं वहाँ से आई और कुशलप्रश्न के ही व्याज से प्रच्छन्न शरीर कुमार के साथ राजकुमारी प्रभावती को ही उन लोगो के पास ले गई।

भद्र—तब ?

तरलिका—इसके बाद उन लोगों के सन्तप्त शरीर की स्थिति के सम्बध मे करुणापूर्णगद्गद स्वर मे परभृतिका के सामने ही मैंने राजकुमारी से निवदन किया कि देखिये अपनी बहनो को इस निरन्तर विरह वेदना से जीवन को क्लेशमय बनाने वाली अवस्था को। आप अब भी क्यों निर्दय बनी हुई हैं मैंने इस प्रकार से राजकुमारी को उलाहना दिया। राजकुमारी बहुत

मपि कथं निरनुक्रोशासि इति उपालभ्य भर्तृदारिकाया महाप्रभावत्वेन प्रविष्टा विव मार्गयत तयोर्मनोरथवल्लभौ।)

भद्र—(सकौतुकम्) अथ किमाह प्रभावती ?

तरलिका—पुणो पुणो पात्थिआए अइ दुक्कर क्खु एद तहावि पराहोणम्हि सिणेहेण बहिणिआण त्ति मणिअताण अग्गदो ज्जेव उअअ ऊअप्फसिअ चिर णिज्झाअन्तीए तिरक्करिणि परिच्चइअ पच्चक्खीभूदो सिरिपज्जुण्णो। (पुन प्रार्थितयाऽतिदुष्कर खल्वेतद्, तथापि पराधीनास्मि स्नेहेन भगिन्योरिति भणित्वा तयोरग्रत एव उदकमुपस्पृश्य चिर निध्यायन्त्या तिरस्करिणीं परित्यज्य प्रत्यक्षीभूतः श्रीप्रद्युम्न।)

भद्र—अहो रमणीयता व्यापारस्य! ततस्तत ?

तरलिका—तदो झत्ति अच्छरीअभत्तिसम्भमपरवसाहिं ताहि सम पहावदीए पुणो पुणो पणमिअ मग्गिदा बहिणिआणं मनोरहवल्लहा। (ततो झटिति आश्चर्यभक्तिसम्भ्रमपरवशाभ्या ताभ्यां सम प्रभावत्या पुन पुन. प्रणम्य याचितो भगिन्योर्मनोरथवल्लभ।)

भद्र—ततस्तत.।

---

प्रभावशालिनी हैं, उनके प्रभाव से चन्द्रवती तथा गुणवती के प्रियतमो को आया ही समझो।

भद्र—(कौतुक से) तब प्रभावती ने क्या कहा ?

तरलिका—बार बार प्रार्थना करने पर प्रभावती ने कहा कि यह कार्य कठिन है फिर भी मैं बहनो के प्रेम से पराधीन हूँ। ऐसा कहकर प्रभावती ने उनके सामने ही आचमन करके देर तक ध्यान किया, इसके अनन्तर ही प्रद्युम्न तिरस्करिणी का त्याग कर के प्रत्यक्ष हो गये।

भद्र—अहा, क्या रमणीय व्यापार है। तब ?

तरलिका—इसके बाद बहनो के साथ ही प्रभावती ने आश्चर्य, भक्ति तथा सभ्रम के वशीभूत हो कर प्रद्युम्न को बार बार प्रणाम किया तथा उन से बहनों के प्रियतमों की मगनी की।

भद्र—इसके बाद ?

तरलिका—तदो इस विहसिअ सुप्पसण्णो पज्जुण्णो ( तत ईषद् विहस्य सुप्रसन्नः प्रद्युम्नः )

ध्यायन्त्योरेतयोः प्राप्तौ पती द्वारवतीपुरात् ।
गदसाम्बाविदं धीरौ चिरौत्सुक्यं हरिष्यतः ॥ ७ ॥
( ध्यायन्त्योरेतयोः प्राप्तौ पतीद्वारवतीपुरात् ।
गदसाम्बाविदं धीरौ चिरौत्सुक्यं हरिष्यतः ॥ ७ ॥ )

एत्तिअं भणिअ अन्तरहिदो तं अज्ज सम्पज्जिस्सदि । ( एतद्भणित्वाऽन्तर्हितस्तमद्य सम्पत्स्यते । )

भद्रः—कुतः पुनरेतयोस्तिरोभावः ।

तरलिका—सिरिपज्जुण्णेण तिरस्करिणि उअदिसिए एदे वि अन्तेउरेम्मि विहरन्ता गोआविदव्वा । ( श्रीप्रद्युम्नेन तिरस्करिणीमुपदिश्य एतावपि अन्तःपुरे विहरन्तौ गोपायितव्यौ । )

भद्रः—( सानन्दम् ) किमधिकम्, अलङ्कृतमेव यदुकुलं भवत्या भर्तृदारिकाभिः ।

तरलिका—महाभाअ, अम्हाणम्पि भट्टिदारिआणं सुप्पसण्णाइं पुण्णाइं । ( महाभाग, अस्माकमपि भर्तृदारिकयोः सुप्रसन्नानि पुण्यानि । )

---

तरलिका—इसके बाद थोड़ा मुस्कुरा कर प्रसन्नभाव से प्रद्युम्न ने कहा कि—

इन लोगों के प्रियतम ध्यान करते ही द्वारका से यहाँ पहुँच गये हैं, धीर गद तथा साम्ब इनकी चिरकालिक उत्कण्ठा को दूर करेंगे ॥ ७ ॥

इतना कह कर प्रद्युम्न अन्तर्हित हो गये, वह बात आज होगी ।

भद्र—फिर वे लोग छिपे कैसे रहेंगे ?

तरलिका—श्रीप्रद्युम्न तिरस्करिणी का उपदेश देकर उन्हें भी अन्तःपुर में विहार करते हुए गुप्त रखेंगे ।

भद्र—और क्या ? तुम्हारी राजकुमारियों ने यदुकुल को अलङ्कृत कर ही लिया ।

तरलिका—महाभाग, हमारी राजकुमारियों के पुण्यों ने भी प्रसन्नता दिखलाई है ।

भद्र —तदहमपि ताभ्याम्—

सुरभिसमयमाद्यन्मन्मथोन्माथमूर्छं
विरहदहनदाहोद्रेकदु स्थामवस्थाम् ।
अनवधिमनुभूयोन्मादमुग्धीभवद्भ्या
यदुकुलतिलकाभ्यामेतदावेदयामि ॥ ८ ॥

त्वयापि तरलिके राजमन्दिरपश्चाद्देशोपासन्नपरिसरे परभृतिका प्रेषणीया। तत्रैव च गत्वा गदशाम्बौ स्थास्यत ।

( इति निष्क्रान्तौ )

[ विष्कम्भक ]

( ततः प्रविशत उपवनगतौ गदशाम्बौ )

गद —( सखेदम् ) वत्स शाम्ब, सर्वतो दुरवलोकरमणीया वसन्तलक्ष्मी ।

शाम्ब — ( नि श्वस्य सलज्जम ) एवमेतत्।

गद —पश्य—

इत पीत स्फीत स्फुरति बकुल केसरभरै

---

भद्र—तो अब मैं भी गद तथा शाम्ब से—जो—वसन्त समय के मदमत्त काम की व्यथा से पूर्ण विरहवेदना की अधिकता से अनवधिदुरवस्था का अनुभव कर के मूढ़ हो रहे हैं इस बात की खबर कर दू ॥ ८ ॥

तरलिके, तुम भी राजमन्दिर के पश्चात् भाग में परभृतिका को भेज दो, वहीं जाकर गद तथा शाम्ब खड़े रहगे। ( गता है )

( विष्कम्भक समाप्त )

( उद्यानगत गद तथा शाम्ब का प्रवेश )

गद—( सखेद ) वत्स शाम्ब, चारों ओर कष्ट से देखने योग्य फिर भी रमणीय वसन्तलक्ष्मी व्याप्त है।

शाम्ब—( नि श्वास लेकर, लज्जापूर्वक ) यही बात है।

गद —देखो—

इधर केसर से पीला बकुल खिल रहा है, इधर कोयल की कूक कान

रितः सूते कर्णज्वरमभिनवः कोकिलरवः ।
इतोऽपि श्रीखण्डोपवनपवनान्दोलितलता-
कृताश्लेषाः केषां मनसि निविशन्ते न तरवः ॥ ९ ॥

अपि च—

नवामोदोद्गारा मुकुलमुखमुद्राविघटने
विसर्पन्ति श्वासायितरुचिरपाटीरपवनाः ।
इमाः श्यामायन्ते मधुकरवितानैर्वनलता
हृतालोकं चक्षुः क्षणमपि किमालोकयतु नः ॥ १० ॥

अन्यतोऽवलोक्य—

प्रकम्पयद्भिः पवनैर्वनालीं मधुव्रतानां क्षणविद्रुतानाम् ।
रसालशाखाशिखरेषु दूरादितोऽपि भींकारघनोऽन्धकारः ॥११॥

अपि च—

प्रसूनपटलारुणोज्ज्वलपलाशव्याजच्छला-
न्मनांसि मदनो बलाद् विरहिणां दहत्येकतः ।

---

को व्यथा दे रही है। श्रीखण्ड के उपवन में वायुकृत आन्दोलित लताओं से आलिङ्गित तरुगण किसके हृदय को नही आकृष्ट कर रहे हैं ॥ ९ ॥

और—यह मुकुलो के विकसित होने पर नवसुगन्ध को प्रसारित करने वाले निःश्वास की तुलना करने मे दक्ष चन्दनवन के पवन हैं, इधर भ्रमरों के सञ्चार से वन की लतायें श्याम वर्ण हो रही हैं। हमारी आखों के तो तेज ही समाप्त हैं वे भला क्या देख पायेंगी ? ॥ १० ॥

दूसरी ओर देख कर—

वायु वग से वनावली को कम्पित करते हुए चलित भ्रमरों का सघन अन्धकार आम्रवृक्ष के शिखरो पर सुदूर इस स्थान से भी दृश्य हो रहा है ॥ ११ ॥

और—पुष्प समुदाय से रक्तवर्ण पलाश पुष्प के ब्याज से कामदेव बलपूर्वक वियोगियो के चित्तो को जला रहा है, फिर जो यह भृङ्गरूप धूमावली

न चित्रमियमुद्गता यदिह भृङ्गधूमावली
विलोचनयुगाञ्जलीर्नयति खेदमस्राम्बुभिः ॥ १२ ॥

शाम्ब.—इदमपरतोऽवलोकयत्वार्यः ।

परोन्मीलन्मल्लीमुकुलकुहराभ्यन्तरगतं
दुरास्वाद्यं सद्योदलमविकलीकृत्य सकलम् ।
समीपे संविश्य क्षणमथ परिक्रम्य परितः
न पातुं वा हातुं प्रभवति मरन्दं मधुकरः ॥ १३ ॥

अपि च—

चरणभरविभङ्गराभिरामिर्विहरति बालरसालमञ्जरीभिः ।
इह मधुरमरन्दबिन्दुपानप्रणयपरः प्रतिशाखमेष भृङ्गः ॥ १४ ॥

किञ्च—

उल्लसदभिनवपल्लवतरुणारुणकिरणशोणशिखरेषु ।
चित्रन्तरुषु निरन्तरमधुकरनिकरान्धकारसञ्चारः ॥ १५ ॥

( अन्यतोऽवलोक्य )

परितः सरोरुहवनान्तरतः पवनात् परागपटलं हरतः ।

---

उड रही है इसमे क्या आश्चर्य है, और उससे आँखों मे जो खेद के आसू आ जाते हैं उसीमे क्या आश्चर्य की बात है ॥ १२ ॥

शाम्ब—आप इधर दूसरी ओर देखें—

अल्पविकसित मल्लीपुष्प के अभ्यन्तर मे स्थित कष्ट से आस्वादनीय दल को खण्डित करके, थोडी देर तक उसके समीप सोकर, फिर चारो ओर घूम कर यह भ्रमर न तो उसके रस को पी रहा है और न छोडकर जा ही रहा है ॥ १३ ॥

मधुरमरन्द के पान का अभिलाषी यह भृङ्ग चरणनिपात से टूट पडने वाली इन बालरसालमञ्जरियो के साथ हरडाली पर विहार कर रहा है ॥१४॥

विकसित होनेवाले नवपल्लवों की किरणों से रञ्जित तरुशिखरों पर भी भ्रमररूप अन्धकार का सञ्चार दीख रहा है, यह आश्चर्य की बात है ॥ १५ ॥

कमलवन के बीच से परागपटल को उडाकर ▪ आने वाले पवनों

कतिधाऽनुधावति न बद्धरुषं परुषं वदन्निव रवैर्भ्रमरः ॥ १६ ॥

अपि च—

स्तबकस्तनभारभङ्गुराभि
लंतिकाभि प्रतिकाननं वलन्तः ।
सरसीजलशीकरावदाताः
सुखमेते समयं नयन्ति वाताः ॥ १७ ॥

गद:—एवमेतत्—

अस्तव्यस्तीकृतकिसलयप्रान्तचेलाञ्चलान्तः
पष्टान्मृष्टाकुलतरबलत्कोरकोरस्तलाभिः ।
वारं वारक्वणितमधुपश्रेणिकाञ्चीभिराभिः
स्वैरं स्वैरं विहरति मरुन्मालतीमञ्जरीभिः ॥ १८ ॥

अपि च—

उन्माद्यद्विन्ध्यगन्धद्विपकरटगलद्दानमैरेयपान-
क्षीबक्षीबा इवामी प्रतिशिखरिसरिन्निर्झरान्तःस्खलन्तः ।
वाता वातापिघातव्यसनिमुनिवनप्रान्तसंशान्तखेदा·
गोदावर्यम्बुनिर्यत्तुहिनितकणिका भारवाहा वहन्ति ॥ १९ ॥

---

का—क्रोध में परुष-भाषण करते हुए भ्रमरगण पीछा कर रहे हैं ॥ १६ ॥

और—पुष्पगुच्छरूप स्तन के भार से अवनम्र लताओं के साथ कानन मे क्रीडा करने वाले एव सरोवर के जल मे स्नान से शीतल यह पवन सानन्द समय यापन कर रहे हैं ॥ १७ ॥

गद—किसलयरूप वस्त्राञ्चल को अस्तव्यस्त करके आकुल कोरकरूप स्तनो को मर्दित करता हुआ, यह पवन सशब्द भ्रमररूप काञ्चीकलापधारिणी इन मालती मञ्जरियो के साथ क्रीडा कर रहा है ॥ १८ ॥

विन्ध्यवासी गन्धगज के दानरूप मद्य के पान से मत्त पर्वत निर्झरों में लुढ़कने वाले यह पवन अगस्त्यमुनि के वनप्रान्त में अपनी थकावट मिटाकर गोदावरी जल कण को लेकर धीरे-धीरे बह रहे हैं ॥ १९ ॥

साम्बः—( सखेदम् ) आर्य, विशेषतोऽद्य विप्रतीकारो वियोगज्वरः ।

गदः—एवमेतत्—

शेषे विशेषेण वियोगवह्निर्दीप्तो दहन्नन्तरमाविरस्ति ।
प्रातः प्रदीपस्य दशावशेषा शिखेव निर्वाणमनुप्रयान्ती ॥ २० ॥

साम्बः—आर्य, अपि नामेदं तथ्यमाह तरलिका ?

गदः—वत्स, प्रभावत्याः प्रियसखी खल्वियमस्मासु किमन्यथा व्याहरति । ( पुरोऽवलोक्य सानन्दम् ) किमपरम्, परागतैवेयं परभृतिका ।

( प्रविश्य )

परभृतिका—( विलोक्य ) कध एदे दुवे वि कुमारा अम्हाणं उजेव मग्गं पलोअन्तो अग्गदो उजेव चिट्ठन्ति । ता उपसप्पामि ( इत्युपसर्पति ) ( कथमेतौ द्वावपि कुमारौ अस्माकमेव मार्गं प्रलोकमानावग्रत एव तिष्ठतः । तदुपसर्पामि । )

---

साम्ब—( खेद ) खासकर के आज का वियोगज्वर अप्रतीकार हो रहा है ।

गद—यही बात है ।

अन्त मे आकर वियोग की आग विशेषरूप मे दीप्त होकर अभ्यन्तर को जलाने लगती है, जैसे प्रातःकालिक प्रदीप को बुझती हुई—बत्तीभर शेष रहने पर—शिखा अधिक प्रकाशित हो उठती है ॥ २० ॥

साम्ब—आर्य, क्या तरलिका का यह कथन सत्य है ?

गद—वत्स, प्रभावती की प्रियसखी तरलिका क्या हम लोगो से मिथ्या कह सकती है ? ( आगे की ओर देखकर—सानन्द ) और क्या, यही तो परभृतिका आ रही है ।

( प्रवेश करके )

परभृतिका—( देखकर ) क्यो दोनों कुमार हमारी ही राह देखते हुए आगे मे ही वर्तमान हैं, अच्छा समीप जाती हूँ ।

गदशाम्बौ—( साकूतस्मितम् ) सखि परभृतिके, इत इतः ।

परभृतिका—( पुर: स्थित्वा प्रणमति )

उभौ—कच्चिदपचीयते प्रियसख्योस्ते शरीरपरिभवः ।

परभृतिका—महाभाआ ( महाभागौ )

जावण कमलवणीणां दिणअरकिरणेहिं किरइ फंसो ।
चन्दा दर परिहवआ ताव ण ताणं समप्पन्ति ॥ २१ ॥

( यावन्न कमलवनीना दिनकरकिरणै क्रियते स्पर्श ।
चन्द्रकरपरिभवास्तावन्न ताषा समाप्नुवन्ति ॥ २१ ॥ )

अहवा ( अथवा )—

अज्ज वि कत्थ परिहरा मोहं गमइ ण मणिगलदाणं ।
परिमलहरिअन्तरआ जइ उवसप्पन्ति अन्तिकं भमरा ॥ २२ ॥

( अद्यापि कथ परिहृतमोहं गमयति न मणिगलस्वम् ।
परिमलहृतान्तरा यदुपसर्पन्ति अन्तिक भ्रमराः ॥ २२ ॥ )

शाम्ब.—( सपरितोषम् ) किमधिकम्, मधुरतरव्याहारपारङ्गमैव परभृतिका भवति ।

---

गद शाम्ब—( साभिप्राय, मुस्कुराकर ) सखि, परभृतिके इधर आओ, इधर ।

परभृतिका—( आगे मे खड़ी होकर प्रणाम करती है )

दोनों—क्या तुम्हारी सखियो का शरीरसन्ताप कुछ कम हो रहा है ?

परभृतिका—महाभाग,

जब तक कमलवनी को सूर्यकर का स्पर्श न प्राप्त हो जाता है, तब तक चन्द्रकरकृत उनके कष्ट समाप्त नहीं होते हैं ॥ २१ ॥

अथवा—

अभी भी मोह छोडकर मणि को गले मे क्यो नहीं धारण करती है, जब कि सुगन्ध पर आकृष्ट भ्रमर स्वयं समीप में आ गये हैं ॥ २२ ॥

शाम्ब—( प्रसन्नता से ) और क्या, परभृतिका ( कोयल ) तो मधुरभाषण करने की कला में पण्डिता ही सुनी जाती है ।

गद —( सोत्कण्ठम् ) सखि परभृतिके, अन्तिकमुपसर्पन्तीति व्याहरन्ती व्यामोहयसि नौ हृदयम्, यदेतानि परपुरुषप्रवेशानवकाशविधुराण्यन्त पुराणि।

परभृतिका—सन्दिट्ठ क्खु एद महाभाआण कुमारपज्जुण्णेण ज अज्ज मअणमहूसवुम्भाअवहलवावारपरिस्समोवरतुभईमामत्तणपराहीणपरिअणे पओसतिमिरम्मि लदाहरपच्छण्णपच्छादुआरिआए राअघरं पविसिअ णिअणोपवणमग्गेण कण्णअन्तउरे पविसिदव्वत्ति। ( सन्दिष्ट खलु एतत् महाभागयो कुमारप्रद्युम्नेन यदद्य मदनमहोत्सवोन्मादबहलव्यापारपरिश्रमोपरतस्वामिभावपराधीनपरिजने प्रदोषतिमिरे लतागृहप्रच्छन्नपश्चाद्द्वारेण राजगृहं प्रविश्य विजनोपवनमार्गेण कन्यान्तःपुरे प्रवेष्टव्यमिति। )

गद —( सोच्छ्वासम् ) प्रदर्शयतु प्रदेशमेनं भवती।

परभृतिका—( अङ्गुल्या निर्दिशन्ती ) महाभाआ, इदो उज्जाण उत्तरेण दरतलतरङ्ग सङ्गमुम्मिसिद सव्वत्त ससत्त सीअल समीर हीरन्ताल विल परिमल पराहीनन्तर-णिस्सरन्त-महुअर सहस्स झंकारसकातल तरुच्चल वजल-जन्तु णिरुरोह परिक्खुहिअ जम्बाल-सम्बलिद सलिल मुणालङ्कुर व्यहद पिसलअवरलणुस्कठा विसठ्ठुलणिमज्जन्त चपलचञ्चूपुडाणुप्प

---

गद—( उत्कण्ठा स ) सखि, परभृतिके, समीप में आ गये हैं ऐसा कहती हुई तुम हमारे हृदयो को मोह में डाल रही हो, क्योंकि यह अन्तःपुर तो परपुरुष प्रवेश के लिये अयोग्य है।

परभृतिका—आप दोनो आदमी को कुमार न सन्देश कहा है कि आज मदनमहोत्सव के परिश्रम से जब परिजन पराधीन हो जायेंगे, तब सन्ध्यासमय में अन्धकार में लतागृह के प्रच्छन्न द्वार से राजभवन में प्रवेश करके आप दोनो व्यक्ति एकान्त उपवन मार्ग से कन्यान्तःपुर में प्रवेश करें।

गद—( उच्छ्वसित होकर ) आप मुझे वह प्रदेश दिखा दें।

परभृतिका—( इशारे से दिखलाती हुई ) महाभाग, इधर उद्यान की

त्तपण उम्मत्तपिअतमावअण संज्यउण सम्मदुम्माअवहुल कलहंसकेली-कल अलाणुअरण-विरुअन्त-कुरअ सारस वहङ्गमणहराङ्गण-परिसरापसर-स्लइ-सरसीए समासण्णादो वासन्तिआमण्डवादो सुहृदसणो ज्जेव सो लदाहरो मए उण इदो गदुआ महाभाआण आगमणं जाव दुआरि-गआए ज्जेव ठातव्व पच्छ उण सिमिर-पच्छण्ण तुम्हाण अन्तेउर-मग्गोवदेसिआ हुविस्स। ( महाभाग, इत उद्यानादुत्तरेण दरतरलतरङ्ग-सङ्गमोन्मिषितसदावसं-ससक्तशीतलसमीर ह्रियमाणाविलपरिमलपराधीना-नरनि-स्वर-मधुकर सहस्रझङ्कारसङ्कन्नततनल जलजन्तुविक्षोभपरिक्षुभितशम्बालसव-लितसलिलमृणालाङ्कुरप्ररूढकिसलयकवलनोत्कण्ठा विसङ्कुलनिमज्जदवदरनवङ्कूपु-टानुप्रवृत्तप्रणयो-मत्त प्रियतमावचनश्रवणसमदो-मादबहुलकलहंसकेलीकलकलानुक-रण विरुवत्कुरङ्गसारसविहङ्गमनोहराङ्गणपरिसराया सरस्वतीसरस्याः समा-सन्नाद् वासन्तिकामण्डपात् सुलभदर्शनम् एव तत् लतागृहम् मया पुनरितो गत्वा महाभागयोरागमन यावद् द्वारगतयैव स्थातव्य, पश्चात्पुनस्तिमिरप्रच्छन्न-योर्युवयोरन्त पुरमार्गोपदेशिका भविष्यामि । )

गदः—एवमस्तु ।

( परभृतिका निष्क्रामति )

---

उत्तर दिशा में तरल तरङ्ग के सम्पर्क से शीतल समीर द्वारा जिसकी सुगन्ध फैलाई जाती है, और जिनके ऊपर हजारों की सख्या से भ्रमर शब्द किया करते हैं ऐसे पुष्पो से युक्त जलजन्तु द्वारा सञ्चालित शैवाल सहित जल मे उत्पन्न मृणाल के पल्लव को खाने के लिये चपल चञ्चुपुट, प्रियतमा के वचन को सुनकर प्रणयोन्मत्त हंसकुल के कलकल शब्द से अनुकूलप्रवृत्त सारसगण से रमणीय, अङ्गणसरसी के चारो ओर वर्तमान वासन्तिकामण्डप के समीप ही लतागृह है। मैं यहां से जाकर आप दोनों के आने तक द्वार पर ही रहूँगी, फिर पीछे आप जब अन्धकार मे छिप जायेंगे, तो मैं आप लोगों को मार्ग बताऊंगी।

गद—ठीक है ।

( परभृतिका जाती है )

शाम्ब'—आर्य, तदलं विलम्बेन । ( इति परिक्रामतः )

गद.—( सोच्छ्वासगर्वम् )

अपसरतु सुरेन्द्रद्रोहिदर्पोऽधुनैष-
प्रियविरहविपाकै साकमस्माकमद्य ।
प्रसरतु पुरुहूतप्रार्थितार्थेन सार्द्धं
सुरतसमरपारप्रापणं यौवनस्य ॥ २३ ॥

शाम्ब.—एवमेतत् । इदानीन्तु—

एकश्च रुचिररमणीरमणानुरक्तं
देवद्विषामपरतो दलनोद्यतञ्च ।
चेतः प्रयातुमिह वज्रपुरानुरोधं
शृङ्गारवीररसवत्त्वमलङ्करोतीति ॥ २४ ॥

( इति पुनः परिक्रम्य, प्रतीचीं दिशमवलोक्य )

कथ प्रत्यासन्न एव पश्चिमसन्ध्यासमयः । तथाहि—

---

शाम्ब—आर्य, अब तो अब विलम्ब करना व्यर्थ है ।

( दोनो जाते हैं )

गद—( उच्छ्वास तथा गर्व के साथ )

आज हमारे विरहकष्टो के साथ-साथ इन्द्र के शत्रु दैत्यो का घमण्ड दूर हो, इन्द्र का अभिलषित तथा हमारे यौवन के रतयुद्ध की पारप्राप्ति सिद्ध हो ॥ २३ ॥

शाम्ब—यही बात है, इस समय तो—

वज्रपुर मे प्रवेश करते समय हमारा हृदय वीररस और शृङ्गाररस से एक ही साथ भरा हुआ है क्योंकि एक ओर हमारे हृदय मे सुन्दरी ललना का अनुराग है और दूसरी ओर दानवो के दलन का अध्यवसाय विद्यमान है ।२४।

( फिर चलकर पश्चिम दिशा की ओर देखकर )

क्या सन्ध्या समय आसन्न है, क्योंकि—

रविरयमभूत्प्रागारूढो नभः शिखरं शनै
झटिति पतति प्रत्यक्सिन्धौ परिस्खलितस्ततः ।
कथमपि चिरायासादासाद्यते पदमुच्चकै-
र्विधिरयमधःकर्त्तुं कश्चित्पलं न विलम्बते ॥ २५ ॥

( पुरोऽवलोक्य ) कथमियं सरसी । तदस्यास्तीरे वासन्तिकामण्डपमन्वेषयाव ।

( इति तथा कुरुतः )

प्रद्यु — ( विलोक्य, सखेदमिव ) । अहह !!

विधिना विनिपातनाय नीतो
रविरस्ताचलमम्बुधावगाधे ।
मुखमुद्रणमम्बुजैरुपेतं
प्रणयं के विपदि प्रमाणयन्ति ॥ २६ ॥

शाम्ब —अहं पुनरेवमवलोकयामि—

यदमुद्रणमस्तमये रवे-
रुचितमाचरितं सरसीरुहैः ।

---

यह सूर्य पहले धीरे धीरे आकाशशिखर पर आरूढ हो गये थे, वही अब वहाँ से गिर कर पश्चिम सागर में उतर रहे हैं। किसी तरह यदि चिर-परिश्रम से ऊंचा पद प्राप्त भी हो जाय तो भाग्य नीचे गिराने में कितनी देर करता है ? ॥ २५ ॥

( आगे की ओर देखकर ) क्यों, यह सरसी है, अच्छा तो इसके तट पर वासन्तिकामण्डप का अन्वेषण करें।

( वैसा करते हैं )

प्रद्यु—( देखकर खिन्नभाव से ) अहह !!

भाग्य ने अगाध समुद्र में डुबाने के लिये सूर्य को अस्ताचल पर लाकर उपस्थित कर दिया है, इस स्थिति में कमलों ने मुखमुद्रण कर लिया है, आपत्ति में प्रेम को कितने लोग प्रमाणित करते हैं ? ॥ २६ ॥

शाम्ब—मुझको तो ऐसा लगता है—

सूर्य के अस्त होने पर कमलों ने मुखमुद्रण कर लिया सो ठीक किया,

किमिव धैर्यनियन्त्रणमन्तरा
सुमनसामवसादन मा पदः ॥ २७ ॥

( निरूप्य ) अहो वैपरीत्यं सरोऽवस्थायाः, तथाहि—

शोभामम्भो मधु मधुलिहः सौरभं गन्धवाहा
यस्मात्प्रातःप्रभृति विततात्म्भोजहस्तादवापुः ।
अस्तं याते सवितरि सरोजातमेतादृगेतत्
सम्पन्मूले भ्रयति विपदं को न संकोचमेति ॥ २८ ॥

( वियदवलोक्य )

रवियां पत्युस्तत्तुरगरथसञ्चारवसुधा
सुधाधाम्नस्ताराप्रणयपरिचाराजिरमहम् ।
किमाक्रान्तं विद्मामिदमुपसरत्यन्धतमसं
प्रकोपोऽयं प्रायोऽरुणतमकरोदम्बरतलम् ॥ २९ ॥

उभौ—( परिक्रम्यावलोक्य च )

---

धैर्यपूर्वक आत्मनियन्त्रण के अतिरिक्त सज्जनों के लिये आपत्ति से उबरने का क्या उपाय है ॥ २७ ॥

( देखकर ) अहा, सरोवर की कैसी विपरीत अवस्था हो रही है ?

जिस सरोवर ने कमलरूप हाथ से मुक्तभाव से प्रातःकाल से ही जल को शोभा, भ्रमरों को पुष्परस, वायु को सुगन्ध प्रदान किया, वही सरोवर सूर्य के अस्त हो जाने पर इस दशा को प्राप्त हो गया है, ठीक ही है—सम्पत्ति के मूल के विपन्न होने पर किसे नहीं सङ्कुचित हो जाना पड़ता है । २८ ॥

( आकाश की ओर देखकर )

मैं सूर्य के घोड़ों तथा रथ के सञ्चार की भूमि हूँ, चन्द्रमा ने मुझ पर ही तारों के साथ अपनी प्रणयलीला प्रस्तुत की है, फिर भी यह अन्धकार मुझ पर आक्रमण करता आरहा है, धिक्कार है मुझे, इसी क्रोध से आकाश लाल होता जारहा है ॥ २९ ॥

दोनों—( चलकर तथा आगे देखकर )

कथमयमेव वासन्तिकामण्डपः । अयञ्चाग्रतएव लतागृहप्रच्छन्न पश्चाद्द्वारदेश । तदस्मिन् मनागन्तर घनतरे तमसि प्रवेक्ष्याव । तदा-वदेकान्ते तिष्ठाव ।

( इति तथा कुरुतः )

शाम्बः—( परितोऽवलोक्य )

चरमाचलव्यवहितस्य रवेः
किरणावशेषमवरोद्धुमिव ।
कथमेकदैव सहसा परित-
स्तमसा समावृतिरे हरितः ॥ ३० ॥

सनिर्वेदञ्च—

अधिगगनमनेकास्तारका राज्यभाजः
प्रतिगृहमिह दीपा दर्शयन्ति प्रभुत्वम् ।
दिशि दिशि विलसन्तः सन्ति खद्योतपोताः
सवितरि परिभूते किन्न लोकैर्व्यलोकि ॥ ३१ ॥

---

यही तो है वासन्तिकामण्डप । यही है लतागृह से प्रच्छन्न पीछे का दरवाजा । थोड़ी देर के बाद यहीं पर गाढ़ अन्धकार में प्रवेश करेंगे । तब तक एकान्त में छिप रहते हैं ॥

( वैसा ही करते हैं )

शाम्ब—( चारो ओर देखकर ) पश्चिमाचल में छिपे हुए सूर्य की बची-खुची किरणों को घेरकर रखने के लिये एकाएक चारो ओर से अन्धकार ने दिशायें घेर लीं ॥ ३० ॥

विरक्तभाव से—

तारों ने आकाश में अपना राज्य कायम कर लिया है, घर घर में दीपक-गण अपना प्रभुत्व स्थापित कर रहे हैं, ये खद्योत के बच्चे दिशाओं में चमकते फिर रहे हैं, सूर्य के पराभूत हो जाने से लोगों को क्या नहीं देखने को मिला ? ॥ ३१ ॥

गदः—( निर्वर्ण्य ) एवमेतत् ।

सम्प्राप्तः प्रतिमन्दिरं पुरवधूविन्यस्तदीपाङ्कुर-
ज्योतिर्जित्वरतामिवेक्षितुमितो निर्यातसूर्यातपः ।
कालः कोऽपि कलावतीजनमन संक्रान्तकामोच्छल-
द्व्यामोहाम्बुधिनीलिमाम्बुनिवहे निर्मग्नदिङ्मण्डलः ॥३२॥

अहो महोत्साहशक्तिसम्पन्नता तमसः, तथाहि—

हृत्तोष्णांशुकरावकाशममितोऽप्याकाशमाशु ग्रसन्-
नन्वेतन्महसामुपाहृतरसां क्ष्मामन्धकूपे क्षिपन् ।
मत्स्वैतान्यपि तैजसानि सहसा चक्षूंषि मुष्णन्महो-
द्रोहोन्मादमयस्तमिस्रनिचयस्त्रैलोक्यमाक्रामति ॥ ३३ ॥

सोत्प्रेक्षञ्च—

वियद्वन्याकाष्ठाचितरविकराग्नावुडुशतं
भृतं तेजस्तोयैः कलशकुलमावर्जयति कः ।

---

गद—( देखकर ) यही बात है ।

सूर्य के तेज को संसार से खदेड़ कर, पुरवधुओं द्वारा प्रज्वालित दीप की रोशनी पर अपनी विजय को देखने के लिये यह ( अन्धकारमय ) समय उपस्थित हुआ है, इस समय युवतियों के हृदयों में वर्धमान कामकृत व्यामोहसागर की नीलजल राशि में समस्त दिशायें मग्न सी दीख पड़ रही हैं ॥ ३२ ॥

अहा, अन्धकार कितना उत्साहसम्पन्न है, क्योंकि—सूर्य की किरणों को अपने यहाँ स्थान देने में समर्थ आकाश को भी इसने ग्रस्त कर लिया है, तेज के सारसर्वस्व को अपने भीतर समाविष्ट करने वाली सारी पृथ्वी को इसने अन्धकूप में डाल दिया है। इन नयनों को भी तैजस समझ कर इसने क्षीणशक्ति कर दिया है ऐसा प्रतीत होता है कि इस अन्धकार ने द्रोह तथा उन्माद से परवश होकर त्रैलोक्य पर आक्रमण कर दिया हो ॥ ३३ ॥

उत्प्रेक्षा सा करता हुआ—

आकाशरूप वन की दिशारूप ( काष्ठ ) में प्रज्वलित रविकिरणस्वरूप वह्नि में तैजस पदार्थ से परिपूर्ण घट सदृश इन तारों को कौन डालता जा रहा

जगत्सर्वं निर्वापणसमयसंभारसुलभै-
स्तमस्तोमैर्धूमैरिव निखिलमन्धीयति यतः ॥ ३४ ॥

अपि च—

यान्यासन् वासरश्रीविरचितमिहिरोदारदीपोपरिष्टात्
संवृष्टाऽऽकाकपालायितविततवियन्नीलता कज्जलानि ।
भूमीभाण्डे हरिद्भिर्युवतिभिरभितः पात्यमानानि मन्ये
तान्येतान्येव सम्प्रत्यविरलतिमिरस्तोमभावं भजन्ति ॥ ३५ ॥

शाम्ब—आर्य, तदयमेव प्रवेशावसरः। ( इत्युभौ पश्चाद् द्वारप्रवेशं नाटयत )

( प्रविश्य परभृतिका शनैः संज्ञां ददाति )

उभौ—( निभृतं परिक्रम्य शनैः परभृतिकायाः समीपमुपसर्पतः )

परभृतिका—इदो इदो महाभाआ। ( इतइतो महाभागौ। ) ( इति सर्वे परिक्रामन्ति )

गद—( पुरोऽवलोक्य सातङ्कम् )

---

है। आग के बुझने के समय पैदा होने वाले धूमसमूह की तरह लगने वाले इन अन्धकारों से समस्त विश्व व्याप्त हो रहा है ॥ ३४ ॥

और—

वासर श्रीस्वरूप रमणी ने सूर्यरूप दीपक पर उलट कर रखे गये कपाल के सदृश प्रतीत होने वाले फैले हुए आकाशरूप पात्र में श्यामतारूप कज्जल इकट्ठा कर रखा था, उन्हें इस समय दिशारूप युवतियाँ पृथ्वीरूप पात्र पर गिरा रही हैं, वही गाढ़ अन्धकार का रूप धारण कर रहा है ॥ ३५ ॥

शाम्ब—आर्य, यही प्रवेश करने का मौका है। ( दोनों पीछे के द्वार से प्रवेश करते हैं )

( प्रवेश कर के परभृतिका धीरे से इशारा करती है )

दोनों—( धीरे धीरे चलकर परभृतिका के समीप जाते हैं )

परभृतिका—इधर चलें महाभाग। ( सभी जाते हैं )

गद—( आगे देखकर सभय )—

दुर्लक्ष्यासु हरित्सु हन्त भवति प्राची विचेयाकृतिः

( क्षणं निरूप्य )

काञ्चित् प्राञ्चिनमांसि नीलनिविलों मुञ्चन्ति किञ्चित्त्विषम् ।

( सत्रासच ) किं बहुना—

नेदीयानुदयाय शीतकिरणस्तत्किङ्करा यत्कराः
सद्यः स्फीतरुच. सुधारसमुचः प्राचीं परिष्कुर्वते ॥ ३६ ॥

साम्ब—( निरूप्य सभयम् ) कः प्रकारः ? पश्य—

उद्धूयमानेन्दुकरैस्तमज्जरयन्धकारवारिनिधेः ।
क्वापि क्वापि विलग्नच्छाया जम्बालधारणी धरणी ॥३७॥

परभृतिका—अलं उव्वेएण । एदाएज्जेव मरगअभित्तीए अन्तरिदं पमदवणं पविसिअ पच्छण्णमग्गेण ज्जेव कण्णअन्तेउरे पविसिदव्वं ।
( अलमुद्वेगेन, एतयैव मरकतभित्त्यान्तरितं प्रमदवनं प्रविश्य प्रच्छन्नमार्गेणैव कन्यान्तःपुरं प्रवेष्टव्यम् । )

( इति सर्वे सत्वरं प्रमदवनप्रवेशं नाटयन्ति )

---

दिशाओं के लुप्त होने के कारण पूर्वदिशा का ज्ञान अन्वेषण का विषय हो रहा है ।

( क्षणभर देखकर ) प्राचीन अन्धकार नील कान्ति फैला रहे हैं ।

( डर कर, ) और क्या, मालूम पड़ता है कि चन्द्रमा का उदय आसन्न है, क्योंकि उसके किरणरूप भृत्यगण अमृतवृष्टि करके पूर्वदिशा को परिष्कृत करने में लगे हुए हैं ॥ ३६ ॥

साम्ब—( देखकर, सभय ) क्या उपाय है ? देखो—चन्द्रमा की किरणों से अन्धकार सागर से आकृष्ट होकर सैवाल की धारा सी प्रतीत होने वाली यह पृथ्वी कहीं कहीं अपनी छाया प्रकट कर रही है ॥ ३७ ॥

परभृतिका—घबड़ाने की जरूरत नहीं है । इसी मार्गस्थित दीवाल के उसपार प्रमदवन में प्रवेश करके आप दोनों कुमार को कन्यान्तःपुर में प्रवेश करना है ।

( सभी शीघ्रता से प्रमदवन में प्रवेश करते हैं )

गदः—( विलोक्य, सकौतुकम् )

किमिह निशया दूतीभावे नियेशितया नया
तिमिरतरुणैः प्रागानीतैर्वनीमवनीभुजः ।
प्रविरलदलच्छायाच्छेदच्छलादभिसारिकाः
प्रतितरुतलं संगम्यन्ते तुषारकरत्विषः ॥ ३८ ॥

परभृतिका—( सकौतुकं स्मित्वा )

अहो दुइत्तणम्मि णिउणत्तण णिसाए जं असभाविअसंगमाइ पि एदाइं चन्दिआअन्धारमिहुनाइं संघडिज्जन्ति । ( अहो दैतेऽपि निपुणत्वं निशाया यदसंभावितसङ्गमान्यप्येतानि चन्द्रिकान्धकार मिथुनानि सङ्घटयन्ते । )

उभौ—( विहस्य ) कः सन्देहः ?

युष्मादृशीनामन्याय नैपुण्याय नमोनमः ।
यूनां येनाङ्कमायान्ति दुर्लभाः प्राणवल्लभाः ॥ ३९ ॥

परभृतिका—महाभाआ, इदो एदं केलीसेलक्देसमारुहीअदु । तदो उण अन्तेउरम्मि ज्जेव ओदरिदव्व । ( इति सर्वे केलीशैलैकदेशारोहणं

---

गद—( देखकर—कौतुक से )

रात्रिरूप दूती अन्धकार युवकों से राजा के वन में विरलपत्र की छिन्नच्छाया के छल से चन्द्रकिरणरूप अभिसारिकाओं का वृक्ष के नीचे मिलन करा रही है ॥ ३८ ॥

परभृतिका—( सकौतुक, मुस्कुराकर )

अहा ! द्वैत रहने पर भी रात्रि की चातुरी तो देखो कि वह मिलन के असंभव रहने पर चाँदनी तथा अन्धकार के जोड़े को मिला रही है ॥ १८ ॥

दोनों—( हँसकर ) इसमें क्या सन्देह ?

आप सदृश दूतियों की चतुरता को धन्यवाद है, जिनके चलते प्राणवल्लभा युवतियाँ युवकों की गोद में आ जाती हैं ॥ ३९ ॥

परभृतिका—महाभाग, आप दोनों कुमार इधर इस क्रीड़ापर्वत के

नाटयन्ति ) ( महाभागौ, इतएव केलीशैलैकदेश आरुह्यताम् , ततः पुनरन्त पुरे एव अवतर्त्तव्यम् । )

उभौ—( समन्तादवलोक्य ) अहो नैर्मल्यमिन्दुमहसाम् , तथाहि—

अजनि रजनिरन्या चन्द्रमःकान्तिरन्या
विपुलचपलवीचिव्याचिता काचिदेव ।
सतरुगिरिसरिद्भिः किं हरिद्भिस्समेतं
धवलिमनि धरित्रीमण्डलं मग्नमेतत् ॥ ४० ॥

परभृतिका—( सातङ्कमिव ) ऋत्ति ओदरन्तु महाभाआ । ( झटित्य-वतरतं महाभागौ । )

( इति निष्क्रान्ताः सर्वे )

अन्तःपुराभिसारो नाम पञ्चमोऽङ्कः ।



---

एक भाग पर आरोहण करें, फिर वहाँ से तो अन्त पुर में ही उतरना होगा ।

दोनों—( चारों ओर देखकर ) अहा, चन्द्रमा की किरणें कितनी निर्मल हैं ? क्योंकि—

चञ्चल किरणों से व्याप्त यह रात्रि दूसरी ही हो रही है, चन्द्रमा की किरणें भी दूसरी ही प्रतीत होती हैं। वृक्ष, पर्वत, एवं नदियों तथा दिशाओं से समेत यह पृथ्वीमण्डल स्वच्छता में निमग्न हो रहा है ॥ ४० ॥

परभृतिका—( सातङ्क की तरह ) आप लोग शीघ्र उतरें ।

( सभी का प्रस्थान )

अन्तःपुराभिसार नामक पञ्चम अङ्क समाप्त



## षष्ठोऽङ्कः

( ततः प्रविशति कञ्चुकी कुब्जकश्च )

कञ्चुकी—( समन्तादवलोक्य ) विविक्त एवायं प्रदेशः, तद्वत्स बाहीक, कच्चित्त्वयापि किञ्चिदाकर्णितं कन्यकान्तःपुरकौलीनम् ।

कुब्जकः—अज्ज, को क्खु एदं पआसिदु पारेइ । ( आर्य, कः खल्वेतत् प्रकाशयितुं पारयति । )

कञ्चुकी—अपि नामात्र प्रत्येति ते हृदयम् ।

कुब्जकः—ण क्खु पत्तिआअदि जइ पच्चक्खं ज्जेव ण आअक्खदि । ( न खलु प्रत्याययति यदि प्रत्यक्षमेव नालक्ष्यते । )

कञ्चुकी—( साभिनिवेशम् ) तद्ब्रूहि त्वयापि किञ्चित् प्रत्यक्षीकृतम् ।

कुब्जकः—तुम्हाण ज्जेव पुरदो मए भणीअदि । एक्कस्मि दिअहे अहं देवीए पव्वईं वदन्तरअणिं विअरितुं चन्दवदीगुणवदीणं अन्तेउर-अणुप्पेसिदो । तत्थ उण केलीहरब्भन्तरं पविसन्तो झत्ति ससम्भमाए

( कञ्चुकी तथा कुब्जक का प्रवेश )

कञ्चुकी—( चारों ओर देखकर ) यह स्थान तो एकान्त है ही, भाई बाहीक, क्या तुमने भी कन्या-अन्तःपुर के सम्बन्ध में कुछ अपवाद सुना है ?

कुब्जक—आर्य, उसे कौन प्रकाशित कर सकता है ?

कञ्चुकी—क्या तुम्हारा हृदय उस पर विश्वास करता है ?

कुब्जक—विश्वास नहीं ही होता, यदि प्रत्यक्ष नहीं देखता ।

कञ्चुकी—( आग्रहपूर्वक ) अच्छा तो बताओ, क्या तुमने भी कुछ प्रत्यक्ष देखा है ?

कुब्जक—मैं केवल आपसे बता रहा हूँ, एक दिन मैं किसी पर्व पर''' सूचित करने के लिये महारानी द्वारा चन्द्रावती तथा गुणवती के अन्तःपुर में भेजा गया था । वहाँ जब मैं केलिगृह में प्रवेश करने लगा तब घबड़ाकर

परहुदिआए आरक्खिअ-ववदेसेण दुआरदेसम्मि ज्जेव पडिरुद्धो जाव आअण्णेमि केलिहरम्मि पुरिसाणं विअ सलावं पच्छा उण भवणब्भन्तरं अहं अणुप्पेसिदो। तत्थ उण तक्कालिओपहोअ-चिन्हाइ पलोअन्तो अप्पलो अन्तो अकम्पि। तत्थ पविस अच्छरीअ विसट्ठुलेन हिअएण परावुत्तो म्हि! (युष्माकमेव पुरतो मया भण्यते, एकस्मिन् दिवसे अहं देव्या पर्वणि ••रजनिं विज्ञापयितुम् चन्द्रवतीगुणवत्यो• अन्तःपुरमनुप्रेषितः। तत्र पुनः केलीगृहाभ्यन्तरं प्रविशन् झटिति ससम्भ्रमया परभृतिकया आरक्षिकव्यपदेशेन द्वारदेश एव प्रतिरुद्धो यावदाकर्णयामि केलीगृहे पुरुषाणामिव संलापं पश्चात्पुनः भवनाभ्यन्तरमहमनुप्रेषितः। तत्र पुनस्तात्कालिकोपभोगचिह्नानि प्रलोकमानः आत्मनोऽन्तरकम्पि। तथा प्रविशन् आश्चर्यविसष्ठुलेन हृदयेन परावृत्तोऽस्मि।)

कञ्चुकी—किमत्राश्चर्यम्। न खलु महामायिनोऽन्तरेणान्तःपुरप्रवेशः पुरुषाणां प्रसज्यते। कथमन्यथा च तथाविध उपनतोऽन्तःशरीर-सन्तापः।

कुब्जकः—अण्णम्पि अच्चाहिद जाणादु अज्जो ज कण्णअन्तेउर-पसाहिआए अम्हाण बअण-बहिणिआए णिउणिआए आअक्खिदं। (अन्यदपि अत्याहितं जानात्वार्यो यत्कन्यान्तःपुरप्रसाधिकया अस्माकं वचन-भगिनिकया निपुणिकयाऽऽख्यातम्।)

---

परभृतिका ने पहरेदार द्वारा दरवाजे पर रुकवा दिया, वहीं से ही मैंने केलि-गृह में पुरुषों का-सा वार्त्तालाप सुना। पीछे मुझे केलिभवन में जाने दिया गया। वहां जाने पर मैंने देखा कि तात्कालिक संभोग के चिह्न वर्तमान हैं। उन्हें देखते ही मैं कांप उठा। आश्चर्यचकित हृदय लिये मैं पैठते ही वापस लौट आया।

कञ्चुकी—इसमें आश्चर्य क्या है? महामायावी के अतिरिक्त पुरुष का अन्तःपुर में प्रवेश संभव ही नहीं है। और यदि पुरुष का प्रवेश नहीं हुआ तो उस तरह की शरीरबाधा कैसे उपस्थित हुई।

कुब्जक—आप और भी अनर्थ जान लें जो मेरी बहन निपुणिका—अन्तःपुर-प्रसाधिका—ने मुझे कहा है।

कञ्चुकी—किन्तत् ?

कुब्जक—तइ आणम्पि भट्टिदारिआण गुव्विणीण विअ लक्खणाइं लक्खीअन्ति। (तत् आसामपि भर्तृदारिकाणाम् गुर्विणीनामिव लक्षणानि लक्ष्यन्ते।)

कञ्चुकी—(सावेगम्) अहो महाश्चर्यमुन्मर्यादता व्यतिक्रमश्च कौमारभावस्य।

कुब्जक—चिरआलदंसी साहु अणेहि सोम्ह पेक्खितुणे परिक्खिदोसि ता किम्पि तक्केसि के क्खु एदे महापाडच्चरा कण्ण अन्तेउर दूसेन्ति। (चिरकालदर्शी साधुजनै साकं प्रेक्षितु परीक्षितोऽसि, तत् किमपि तर्कयसि के खल्वेते महापाटच्चरा कन्यान्तःपुर दूषयन्ति।)

कञ्चुकी—किं ब्रवीमि—

वितथं न ब्रह्मवचो न चोत्पथे पुरजनाः प्रवर्त्तन्ते।
नापि प्रमादभाजः क्षितिपालपरक्षिण पुरुषा ॥ १ ॥

कुब्जक—अज्ज मए एव्व सम्भावीअदि जइ णराण ज्जेव केवि माआविणो होन्ति। (आर्य मया एव सम्भाव्यते यदि नराणामेव केऽपि मायाविनो भवन्ति।)

---

कञ्चुकी—वह क्या ?

कुब्जक—यही कि राजकुमारियों के लक्षण गर्भिणी के से हो रहे हैं।

कञ्चुकी—(आवेग से) बहुत बड़ा आश्चर्य ! इतनी उन्मर्यादता तथा कुमारपन का व्यतिक्रम !!

कुब्जक—तुमने बहुत दिन देखे हैं सज्जनों के साथ रहकर परीक्षित हो चुके हो तुम कुछ तर्क करते हो कि यह कौन चोर है जो कन्यान्तःपुर को दूषित कर रहे हैं।

कञ्चुकी—मैं क्या कहूँ ?

न ब्रह्मा का वरदान मिथ्या हो सकता है, न पुरवासी जन उन्मार्गगामी हुए और न राजान्तःपुर के रक्षकगण ही असावधानता बरत रहे हैं ॥ १ ॥

कुब्जक—आर्य, मैं तो ऐसी सम्भावना करता हूँ कि मानवों में से ही ये कुछ मायावी हैं।

कञ्चुकी—युज्यमानमाशङ्कसे—

प्रयात. पातालं वलिरपि वलन्वामनतनौ
प्रपेदे वैदेही विपदमभियाता दशमुखम् ।
प्रप-ने प्रद्युम्ने क्षयितमखिलं शम्बरकुलं
सुख सुप्ता कुत्रापरिचितपरासञ्जनकरा. ॥ २ ॥

अथ च सर्वथा कोऽप्यय दैवतनीतिविनिर्वाहितो दुरर्थोपनिपात ।
पश्य—

हंसा स्व सरसीनिवासरसिका कस्मादकस्मादिह
प्राप्तास्ते पुरमध्यमद्भुतनिधीनानीनयन्तो नटान् ।
तेभ्यश्चेदवरोधदूषणमिदं हा हन्त सम्भाव्यते
को जानाति करिष्यते किमपरं दुर्मेधसा वेधसा ॥ ३ ॥

कुब्जक—( सचिन्तम् ) ता अज्ज किं त्ति ण एद महाराअ गोअरी करीअदि । ( तद् आर्य, किमिति न एतद् महाराजगोचरीक्रियते । )

---

कञ्चुकी—तुम ठीक आशङ्का करते हो—

बलि ने वामन के ऊपर विश्वास किया तो वह पाताल भेज दिये गये । सीता ने रावण पर विश्वास करके विपत्ति भोगी । प्रद्युम्न के आ जाने से सारा राक्षसकुल समाप्त हुआ, भला अपरिचित जन के साथ आसक्ति करके कौन सुख से सो सका है ॥ २ ॥

और सब तरह से यह कोई देवगण की नीति से चलाया गया अनर्थ का सूत्रपात है । देखो—

स्वर्गीय सरोवरों में निवास करने वाले हंस अकस्मात् यहाँ क्यों आ गये ? फिर वे नगर के मध्य आश्चर्य के निधि नटों को क्यों [illegible] आये ? यदि उन नटों के द्वारा ही यह अन्त पुर का दूषण हुआ है तो कौन जानता है कि दुष्ट विधाता और क्या करेगा ? ॥ ३ ॥

कुब्जक—( चिन्तित होकर ) आर्य, तो फिर यह बात क्यों न महाराज से कह दी जाय ?

अपि च—

कुर्वाणाः कमलवनीविकासमाशाः
काश्मीरस्तबकभरैः प्रसाधयन्तः ।
लुम्पन्तो विरहरुजं रथाङ्गयूना-
मेते द्यां मिहिरकराः परामृशन्ति ॥ ८ ॥

किञ्च—

उत्सिक्तानि तमांसि मांसलतरैरुत्सार्य सद्यः करै-
रुत्साद्य प्रसभं मृगाङ्कमहसामाह्लादलक्ष्मीमपि ।
चक्राणामरुणो जहार करुणोपन्यासगर्भा गिरो
भानुः केवलमेत्य पङ्कजवनी सौजन्यमभ्यस्यतु ॥ ९ ॥

अपि च—

येषां हन्त समासमा इति समाक्रन्दाकुलं जल्पतां
कल्पान्तानलतामियाय रजनीविश्लेषितानां विधुः ।
एषां कस्त्वं क इति क्रुधा कथयतान्तेषामिदानीमसौ

---

वधः नहीं कर सकते हैं ॥ ७ ॥

कमल वन को विकसित, दिशाओं को केसर के गुच्छों से प्रसाधित एवं चक्रवाकयुगल के विरह कष्ट को समाप्त करने वाले सूर्य के कर आकाश को छू रहे हैं ॥ ८ ॥

गर्वान्वित अन्धकार राशि को बलिष्ठ किरणों द्वारा निष्कासन, चन्द्रमा की ज्योति का समापन, चक्रवाकों के करुण रुदन, इन सारे कार्यों को तो अरुण ने सम्पन्न कर रखा है, सूर्य आकर केवल अब कमलवनों के साथ सौजन्य का अभ्यास करें ॥ ९ ॥

रात में चक्रवाकयुगल बिछुड़े रहते हैं। वे उस समय समा-समा बोलते हैं उनके शब्द का यह अर्थ लगाया जा सकता है कि यह रात्रि वर्ष के समान है, समा वर्ष का नामान्तर है, रात भर चक्रवाकगण क्रन्दन करते हुए समा समा कहकर चन्द्रमा को कष्टप्रद होने के कारण प्रलयानल समझते रहे, वही चन्द्रमा अब प्रातः काल में 'चक्रवाकों के रोकहु' तुम कौन होते हो ? इस प्रकार की

चक्राणां सहते विनम्रवदनो न्यक्कारमापद्गतः ॥ १० ॥

किञ्च—

स्मरनरपतेः कारागारायितानयमालया-
नुदयति रविर्जालैर्जालैर्निवेश्य निजत्विषः ॥
प्रणयिषु निशि ग्रीवाग्राहं बलाद्विनिवेशितं
भुजबिसलताबन्धग्रन्थिं हरन् हरिणीदृशाम् ॥ ११ ॥

अपि च—

आविष्कुर्वन्निव नवनवेनादरेणानुरागं
सर्वाङ्गीणं सुचिरविरहोन्मूर्च्छितायां नलिन्याम् ।
त्रैलोक्यान्धीकरणतिमिरद्वेषरोषारुणत्वं
व्याकुर्वन् वा किमयमुदयत्यम्बरे तिग्मरोचिः ॥ १२ ॥

किञ्च—

विरहेण रवेर्दिनावसाने परिपीतानि विषाणि वारिजिन्यः ।
कमलोदरनिस्सरद्द्विरेफव्यपदेशादधुना किमुद्गिरन्ति ॥ १३ ॥

---

कोपपूर्ण उक्ति को विनम्र मुख होकर तिरस्कार के रूप में सुनने को बाध्य है, आखिर वह आपत्ति में जो है ॥ १० ॥

कामरूप नृपति के कारागार सदृश बने इन घरों में खिड़कियों के मार्ग से अपनी किरणों को पैठाकर सूर्य प्रणयियों की गर्दनों में बलात् डाले गये स्त्रियों के बाहुलताबन्धन को दूर कर रहा है ॥ ११ ॥

चिरकालिक विरह से मूर्च्छिता नलिनी के आगे अपने नव-नव समग्र अनुराग को प्रकट करता हुआ या त्रैलोक्य को अन्धकर देने वाले अन्धकार पर द्वेष से अपनी सर्वाङ्गीण अरुणता को व्यक्त करता हुआ यह सूर्य आकाश में उदित हो रहा है ॥ १२ ॥

सन्ध्या समय कमलिनियों ने सूर्य के विरह में जो विष निगल लिये थे, इस समय वही विष कमल के अभ्यन्तर से निकलते हुए भ्रमर के ब्याज से बाहर आ रहे हैं ॥ १३ ॥

अपि च—

> जानीमहे रविरतीत्य चिरप्रवास-
> मानीय नीलमणिकङ्कणमादरेण ।
> विन्यस्यति भ्रमरमण्डलकैतवेन
> सङ्कोचशालिनि सरोजकरे नलिन्याः ॥ १४ ॥

किञ्च—

> त्वमन्यहरिदङ्गनाविहरणव्यपेतक्षपः
> स्पृशन्नुपगतोऽत्र यः किमधुना करैर्मामिति ।
> प्रसार्य कमलकरं भ्रमरभाक्रतिव्याजतः
> समाचरति पद्मिनी किमु रवेरुपालम्भनम् ॥ १५ ॥

अथ कथमहमिदानीमुदयाचलचूडामणितामभ्युपेयुषि सहस्रमयूखे शयनीयसुखेनालसो दिवसोचितं न व्यवहरामि । (इत्युत्थाय) प्रिये प्रभावति, (समन्तादवलोक्य) कुत्र सा प्रभावती ? शून्यमेवैतत् पल्यङ्किकामन्दिरम्, तदन्वेषयामि चित्रशालिकायाम् । (इति परिक्रम्य चित्रशालिका प्रवेशं नाट

---

चिरकालिक प्रवास को बिताकर घर लौटा हुआ सूर्य नायक नलिनीरूप अपनी प्रेयसी के कमल स्वरूप सङ्कोचशाली (अविकसित और लज्जायुक्त) हाथ में यह भ्रमरमण्डलरूप नीलम का बना हुआ कङ्कण आदर से पहना रहा है ॥ १४ ॥

पद्मिनी नायिका प्रातःकाल में कमलरूप हाथ चमकाकर भ्रमर के शब्दों के व्याज से सूर्य को यह कहती हुई उलाहना दे रही है कि रात में तुम दूसरी दिगङ्गना के साथ विहार करते रहे इस समय अपने कर से मुझे छूने हुए तुमको लज्जा नहीं हो रही है ? ॥ १५ ॥

क्यों मैं इस समय भी—जबकि सूर्य भगवान् उदयाचल की चोटी पर पहुँच गये हैं—शय्यासुख से अलसाया हूँ और दिवसोचित कार्य नहीं कर रहा हूँ । (उठकर) प्रिये प्रभावति, (चारों ओर देखकर) कहाँ गई प्रभावती ? यह पर्यङ्किका मन्दिर तो शून्य है । अच्छा तो चित्रशालिका में ढूंढ़ता हूँ ।

शित्वा ) ( सावेगम् ) कथं शून्यमेव सर्वम् ( सचिन्तम् ) किमन्तःपुरगतः भवेत् ? अथवा—

अपेक्षते मयोत्साहं श्वसितेऽप्यसितेक्षणा ।
सम्भावनापि का दूरं गमने मम नेत्रयोः ॥ १६ ॥

धिक् प्रमादः,

किं भूयात् कुपितैव कोमलतनुः कोपं न सा शिक्षिता
तस्या हन्त हृदः प्रतीपकरणे कस्याथवा पौरुषम् ।
प्रच्छन्ना यत वञ्चनाकुतुकिनी तन्वी भवेदित्यपि
व्यस्तं तद्विनयक्रमेण विकलस्तत्तर्क मूकीभव ॥ १७ ॥

तदन्यतो गवेषयामि प्रियतमाम् ( इति परिक्रमन्नग्रतोऽवलोक्य ) अये कथमासन्नायामेव केलिकमलिनीखण्डतीरस्फटिकशिलावेदिकायां तरलिकया सह स्नातोपविष्टा विषादाविष्टा प्रभावती विलोक्यते, यतः—

---

( जाकर तथा चित्रशालिका में प्रवेश का अभिनय करके ) ( उद्वेग से ) सारा भवन शून्य ही है । ( चिन्ता से ) क्या अन्तःपुर चली गई ? अथवा—

जो प्रभावती साँस लेने में भी मेरे द्वारा दिये जाने वाले उत्साह की अपेक्षा करती है, वही मेरी आँखों से दूर चली जायगी इसकी क्या सम्भावना है ?

बड़ी गलती हुई ।

क्या वह कुपित हो गई होगी ? नहीं, कुपित होना तो उसने सीखा ही नहीं है, उसके हृदय के प्रतिकूल आचरण करे, ऐसा साहस किसको है, मुझे वञ्चित करने के उद्देश्य से वह कहीं छिप गई हो, यह भी उसकी विनय के विपरीत है, अतः, हे मेरे तर्क, आप असमर्थ हैं, अतः मौन ही धारण करें ॥१७॥

तब तक दूसरी ओर ढूंढ़ता हूँ ( चलता हुआ आगे की ओर देखकर ) अरे प्रभावती तो इसी समीपस्थित कमलिनी सरोवर के तीर पर अवस्थित स्फटिक-मणि निर्मित शिलावेदिका पर तरलिका के साथ बैठी हुई स्नात तथा विषण्ण सी लग रही है, क्योंकि—

पुरस्त्यक्तालापं प्रसरदनुतापं सहचरी-
मुपासीनां दीनां कलयति न नेत्रातिथिमपि ।
गलद्वारिण्यारादहह सहजामर्षकलुषा-
मुपाकीर्णामंसे न पुनरनुबध्नाति कबरीम् ॥ १८ ॥

तदग्रतो गत्वा प्रच्छन्न एव प्रियतमायाः प्रतायमानस्य विषादस्या-
कस्मिकं कारणमाकलयामि । ( इति परिक्रम्य निरूप्य च )

यदेतस्याः कम्पाममधरमस्पातसुभगं
विरादक्तं शोणाकुलनयनकोणाद्विपतति ।
सितस्फीताघाटीघृतललितपाटीरमलिकं
न किञ्चित्तन्मानादपरमनुमानादिविषयः ॥ १९ ॥
( इति सचिन्तमेकान्ते स्थितः ) ।

( ततः प्रविशति यथानिर्दिष्टा प्रभावती तरलिका च )

तरलिका—सहि समस्सस समस्सस, अथ हन्त कीरिसं तं दइवेअकारणं

---

बातें करना बन्द कर लिया है, अनुताप-भी लग रही है, सेवा में उपस्थित दीन सहचरी की ओर दृष्टिफेर भी नहीं कर रही है, उसके बालों से पानी चू रहा है मानों वे भी अमर्ष से पूर्ण हों, ऐसे कंधों पर लटकते हुए बालों को वह सँभाल भी नहीं रही है ॥ १८ ॥

इसलिये आगे चल कर छिपे-छिपे ही प्रियतमा के बड़े [illegible] विषाद के आकस्मिक कारण का पता लगाता हूँ। ( चलकर तथा देखकर )

काँपते तथा झुके हुए अधरों पर रक्तवर्ण नयन कोण से आँसू टपक रहा है, इसने उजली स्वच्छ साड़ी पहन रखी है, ललाट पर चन्दन बिन्दु कर ली है, अतः मान के अतिरिक्त कोई दूसरी वस्तु अनुमान आदि का विषय नहीं है ॥ १९ ॥

( चिन्तित भाव से एकान्त में खड़ा हो जाता है )

( पूर्वनिर्दिष्टरूप में प्रभावती तथा तरलिका का प्रवेश )

तरलिका—सखी, धीरज धारण करो, तुम्हारे उद्वेग का कौन-सा ऐसा

जं अम्हेहिम्पि जाणिदुं ण पारीअदि। (सखि समाश्वसिहि समाश्वसिहि, अथ कीदृशं तदुद्वेगकारणं यदस्माभिरपि ज्ञातुं न पार्यते।)

प्रभावती—(सबाष्पोपरोधम्) जइ अहं तम्वाहरिउं पारेमि। (यदि अहं तद् व्याहर्तुं पारयामि।)

तरलिका—(सप्रसरम्) सहि कधेहि कधेहि कहिदो ज्जेव चित्तमण्णु सज्झवेअणो भोदि। (सखि कथय कथय, कथित एव चित्तमन्यु सह्यवेदनो भवति।)

प्रभावती—अयि किङ्कहेमि मन्दभाइणी। (अयि, किं कथयामि मन्दभागिनी।)

तरलिका—पडिहदममङ्गलं। (प्रतिहतममङ्गलम्।)

प्रभावती—सुण। अज्ज णिसीहम्मि सो तुम्हाण वल्लहो महाभाओ (इत्यर्धोक्ते वाक्स्तम्भं नाटयति) (शृणु, अद्य निशीथे स युष्माकं वल्लभो महाभागः)

कुमार—(सत्रासम्)

> किम्मया मन्दभाग्येन विहितं हरिणीदृशः।
> बाष्पोपरोधकुण्ठेऽस्या यन्न कण्ठेऽप्युदञ्चति ॥ २० ॥

---

कारण है जिसे मैं भी नहीं जान सकती हूँ?

प्रभावती—(आंसू रोककर) यदि मैं उसे कह सकती?

तरलिका—(आगे बढ़कर) सखी कहो कहो, कहने से ही मानसिक उद्वेग सह्य होता है।

प्रभावती—अरी, मैं अभागिनी क्या बताऊँ?

तरलिका—अमङ्गल दूर हो।

प्रभावती—सुनो, आज रात में वह तुम्हारे वल्लभ महाशय…(इतना कह कर वचनावरोध का अभिनय करती है)

कुमार—(डरकर) मुझ मन्दभाग्य के द्वारा इस सुन्दरी के प्रति क्या अपराध हो गया है जो इसके बाष्पाकुल कण्ठ से बाहर भी नहीं निकल रहा है॥ २० ॥

तरलिका—कधेदु कधेदु पिअसही। (कथयतु कथयतु प्रियसखी!)

प्रभावती—सो तुम्हाणं वल्लहो महामाओ तादं वज्जणाहं उब्बन्धिअ दक्खिणाए दिसाए परव्वसं विसज्जेदि। पच्छा तेण सव्वासुरवाहिणीपुरस्सराहिं अम्बाहिं गाइअदि त्ति मए पलोइदं। (स युष्माकं वल्लभस्तातं वज्रनाभमुद्बध्य दक्षिणया दिशा परवशं विसर्जति, पश्चात्तेन सर्वासुरवाहिनीपुरस्सराभिरम्बाभिर्गीयत इति मया प्रलोकितम्।)

तरलिका—(सविषादमात्मगतम्) अहो दुरत्थोवणिवादसूअअ सिविणअ। (अहो, दुरर्थोपनिपातसूचकः स्वप्नः।)

कुमार—(सापराधमिव) सत्यमवश्यं भाविनो महतो मदपराधस्योपसूचक स्वप्नदर्शनमेतत्। भवतु वा, समाधेयमिदमापाततः।

प्रभावती—(तरलिकाया मुखमवलोक्य सखेदम्) अइ किं मुद्दिअमुही चिट्ठसि। (अयि किं मुद्रितमुखी तिष्ठसि?)

तरलिका—(सकृतकस्मितम्) सहि सिविणअं क्खु एदं ण एआदिसस्स उव्वेअस्स कारण। (सखि, स्वप्नः खल्वेष न एतादृशस्य उद्वेगस्य कारणम्।)

---

तरलिका—कहो प्रियसखी, कहो।

प्रभावती—वह तुम्हारे वल्लभ महात्मा तात वज्रनाभ के गले में बन्धन लगाकर बरबस ले जाकर दक्षिण की ओर छोड़ जाते हैं। पीछे समस्त असुर-सैन्य के साथ हमारी मातायें उनकी स्तुति करती हैं। ऐसा मैंने स्वप्न देखा है।

तरलिका—(सविषाद, स्वगत) अरे, यह तो विपत्ति का सूचक स्वप्न है!

कुमार—(सापराध की तरह) सचमुच यह तो मेरे भावी महान् अपराध का सूचक स्वप्न है। जो हो, इस समय तो इसका तात्कालिक समाधान करना ही है।

प्रभावती—(तरलिका का मुख देखकर) (सखेद) फिर तुम क्यों मुँह बन्द करके बैठी हो?

तरलिका—(बनावटी मुस्कान के साथ) सखि, यह तो स्वप्न है, अतः यह इस तरह के उद्वेग का कारण नहीं है।

प्रभावती—( सास्रम् ) अइ किं इदो वि अहिअदरं उव्वेअकारण जदो तदो ज्जेव आवादमहुरवावारमणहरादो परिणामदीहदुव्विणअदारुणादो हिअअवल्लहादो ज्जेव एआरिसो अणत्थो सम्भावीअदि। तधावि पिअसहि कधेहि किं एत्थ सुहपरिणामत्थं करीअदि। (अयि किमितोऽपि अधिकतरमुद्वेगकारणं यतस्तत एव आपातमधुरव्यापारमनोहरात् परिणामदीर्घदुर्विनयदारुणात् हृदयवल्लभात् एव एतादृशोऽनर्थः सम्भाव्यते। तथापि प्रियसखि, कथय, किमत्र सुखपरिणामाय क्रियते।)

तरलिका—एत्थ किल सिविणअज्झाअम्मि सुणीअदि—'आलोकितदुःस्वप्नाः पुनः स्वपन्त्यन्यतो न तद् ब्रुवते'। ( एवं किल स्वप्नाध्याये श्रूयते )

प्रभावती—हा मए एदं किम्पि ण समाचरिअं। ( हा मया एतत् किमपि न समाचरितम्। )

तरलिका—देवगुरुविप्रपूजनसत्कीर्त्तनतो नयन्ति तदुपशमम्।

प्रभावती—( सावष्टम्भम् ) ता समाहरदु पिअसही देवदाण पूओवअरणाइं दिअवराण भोअणवसणसुवण्णाइं। ( तत् समाहरतु प्रियसखी देवतानां पूजोपकरणानि द्विजवराणां भोजनवसनसुवर्णानि। )

---

प्रभावती—( रोती हुई ) तो क्या इससे भी बढ़ कर कुछ उद्वेग का कारण हो सकता है ? जिसे हृदयवल्लभ बनाया वही ऊपर-ऊपर से मधुर वचन कहकर परिणाम मे दुर्विनय भीषण बने और इस तरह के अनर्थ की सम्भावना पैदा कर दे। फिर भी यह बताओ कि इस स्थिति में भी परिणाम सुख हो इसके लिये क्या किया जाय ?

तरलिका—स्वप्नाध्याय मे ऐसा लिखा है कि—दुःस्वप्न देखनेवाले फिर से सो जाय, और दूसरो से चर्चा न करें॥

प्रभावती—हाय, मैंने यह कुछ भी नही किया !

तरलिका—देवता ब्राह्मण तथा गुरु के पूजन से उसको शान्त करते हैं।

प्रभावती—( रुककर ) तो प्रियसखी, देवपूजन की सामग्री और ब्राह्मणो के लिये भोजन तथा वस्त्र ला दो।

तरलिका—जं पिअसही आणवेदि त्ति ( निष्क्रान्ता ) ( यद् प्रियसखी आज्ञापयति । )

( नेपथ्ये कलकलः )

प्रातः प्रत्यग्रघृणौ ग्दविकरकलनोत्कण्ठया विस्तृतानां
वस्तूनां सङ्ग्रहायाकुलकरचरणं संभ्रमेण स्रमद्भिः ।
वातप्रातोऽपहृतप्रबलजलधरध्वानमाकर्ण्य पौरै-
रुद्गीर्णोऽम्भःकणानां पतनपुलकितैः कोऽपि कोलाहलोऽयम् ॥२१॥

अपि च—

सगर्वं कुर्वन्तः कलितमुकुलं पङ्कजकुलं
विलिम्पन्तो व्योमोदरमपि दलत्कज्जलभरैः ।
अमी भूमीकोपात्क्वचिदपि करानम्बरमणे-
र्निरस्यन्तो धावन्त्यहमहमिकाभिर्जलमुचः ॥ २२ ॥

कुमारः—( आकर्ण्यावलोक्य च ) अये कथमयं प्रवर्त्तमानप्रावृट्समय-सुलभः सर्वतोऽपि वियति वारिधरोपरोधः । अहह !!!

---

तरलिका—प्रियसखी की जैसी आज्ञा । ( जाती है )

( नेपथ्य में कलकल )

प्रातःकाल धूप में सुखाने के लिये वस्तुयें आँगनों में फैलाई गई थीं, उन्हें सञ्चित करने के लिये आकुल हाथ-पैर से घबड़ाहट के साथ दौड़ते हुए पुरवासी-जन हवा से बुलाये गये मेघ का गर्जन सुनकर तथा जलकण के पतन से पुलकित होकर यह कोलाहल कर रहे हैं ॥ २१ ॥

गर्व के साथ कमल कुल को मुकुलित तथा आकाश के मध्यभाग को कज्जल से लिप्त करते हुए तथा भूमण्डल से सूर्य किरणों को कहीं दूर भगाते हुए ये मेघ होड़-सी लगाकर दौड़ रहे हैं ॥ २२ ॥

कुमार—( सुनकर ) अरे, क्या यह वर्षा-काल में सुलभ जलधर का घेराव आकाश में चारों ओर फैल रहा है ? अहह !!

यावद्वियोगविधुरां मधुरादरेण
भानुर्विनोदयति पङ्कजिनीं करेण।
दुर्दैवदुर्विलसितोन्नमितेन ताव-
दाक्रान्तमम्बरमनेन दुरम्बुदेन ॥ २३ ॥

( प्रविश्योपकरणादिहस्ता सम्भ्रान्ता तरलिका )

तरलिका—भट्टिदारिए, समाहरिदं क्खु एदं समाहरिदव्वं, सम्पदं उण एत्थ किम्पिण सपज्जिस्सदि त्ति जाणीअदि, जदो एदे समन्तदो वि जलासारं वरिसन्ता परापडिआ व्वेज जलहरा। ( भर्तृदारिके, समाहृतं खल्वेतद् समाहर्तव्यम्, साम्प्रतं पुनरत्र किमपि न सम्पत्स्यते इति ज्ञायते, यत एते समन्ततोऽपि जलासारं वर्षन्तः परापतिता एव जलधराः। )

प्रभावती—( सखेदम् ) सहि कहं सपज्जदु जइ देव्वं व्वेज एदं ण अनुमण्णदि। [ इत्युभे वर्षवातोद्वेगं नाटयतः ] ( सखि, कथं सम्पद्यतां यदि दैवमेव एतन्नानुमन्यते। )

कुमार—( विलोक्य सस्पृहम् )

---

जब तक वियोग कष्ट से पीडित कमलिनी को सूर्य अपने कर ( किरण–हाथ ) के स्पर्श से विनोदित करे तभी तक दुर्भाग्य द्वारा उन्नमित मेघों ने आकाश को आक्रान्त कर लिया ॥ २३ ॥

( सामग्री हाथ में लिये घबड़ाई हुई तरलिका का प्रवेश )

तरलिका—राजकुमारी, जो उपकरण लाना था सो मैं ले आई, लेकिन लगता है, इस समय यहाँ कुछ भी नहीं हो सकेगा। क्योंकि जलवर्षा करते हुए ये मेघ आ पहुँचे हैं।

प्रभावती—( मोह के साथ ) कार्य सम्पन्न कैसे हो जब कि भाग्य को ही मञ्जूर नहीं है।

( दोनों वर्षा के वेग तथा वायु से उद्वेग का अभिनय करती हैं )

कुमार—( देखकर—सस्पृहभाव से )

पुलकयति गण्डपालीं मलकालीमाकुलीकुरुते ।
कलयति चञ्चलमञ्चलमहमिव जलदानिलः सुतनोः ॥ २४ ॥

अपि च—

चकयति वदनमस्याः शीत्कारविकारिपुलकितकपोलम् ।
मामकनखर-निपात-प्रतिनिधि-रघुना नवाम्बुकणः ॥ २५ ॥

तरलिका—तुवरदु तुवरदु भट्टिदारिआ । (त्वरतां त्वरतां भर्तृदारिका ।)

प्रभावती—( निःश्वस्योत्थाय ) ता सपदं समासण्ण-कोलासेल सिहरप्पासाद ज्जेव गच्छम्ह । [ इति त्वरितं परिक्रामतः ] (तत् साम्प्रतं समासन्न-क्रीडाशैलशिखरप्रासादम् एव गच्छामः । )

कुमार—अहह,

वेगावहन्नितम्बस्थलचलदलघुश्रोणिविलग्नैकहस्ता
धातव्यस्ताञ्चलानां कथमपि च करेणापरेणाहरन्ती ।
मल्लारीध्वानधारानुकरणतरणेः किङ्किणी कङ्कणानां
भूयो भूयो भयार्त्तैरिव कलकलितैः प्रेरितेव प्रयाति ॥ २६ ॥

---

मेरी ही तरह यह मेघ के साथ आने वाली वायु इस सुन्दरी के कपोल को पुलकित, केशपाश को आकुल, एवं नयनप्रान्त को चञ्चल किये दे रहा है ॥ २४ ॥

और—मेरे द्वारा किये गये नखक्षत का प्रतिनिधि यह नवजलकण इस सुन्दरी के रोमाञ्चित कपोल मुखमण्डल को शीत्कार से विकृत तथा वक्र बना रहा है ॥ २५ ॥

तरलिका—राजकुमारी, शीघ्रता करें, शीघ्रता करें।

प्रभावती—( सांस लेकर, उठकर ), इस समय हम लोग क्रीडाशैल के शिखर पर वर्तमान प्रासाद में ही चलें। ( वेग से चलती हैं )

कुमार—वेग के कारण चञ्चल नितम्ब से गिरते हुए वस्त्रान्त पर एक हाथ रखे हुए वायुचालित वस्त्र के अञ्चल को किसी तरह दूसरे हाथ में पकड़े, मल्लार की ध्वनि का अनुकरण करने वाले इन भयभीत किङ्किणी शब्दों से प्रेरिता की तरह प्रतीत होती चली आ रही है ॥ २६ ॥

( सस्पृहम् )

याच्ञाभिरेव सुरतावसरे कदाचि
दृष्टानि यानि कथमप्यवलोकितानि।
सन्दर्शितानि सुदृशो ललितानि तानि
व्यस्ताम्बरं मुहुरनेन समीरणेन ॥ २७ ॥

प्रभावती—( क्षणं स्थित्वा, निःश्वसती ) अम्महे बलिअं पराहूदम्हि एदिणा पओहरोग्गम सम्भमेण। ( अहो बलवत् पराभूतास्म्येतेन पयोधरोद्गम-सम्भ्रमेण। )

कुमार—( सकातर्यम् ) एवमेतत्।

वक्षोघनक्षोभमुदस्तहारं स्फारं रुणद्धि श्वसितावतारम्।
ऊरू घनोरुकम्पगुरू तदस्यामनेन किन्नापकृतं घनेन ॥ २८ ॥

अपि च—

गतिं प्रतिपदं त्वराकुलतया ऽनया संवल-
ज्जलार्द्रं जघनाम्बरा वरतनो पराभूयते।

---

( स्पृहाभाव से )

रतिक्रीडा के अवसर पर कभी कभी नाना विनय के बाद मुझे प्रभावती के जो अङ्ग देखने को मिले, उन्हीं अङ्गों को वस्त्र को अस्तव्यस्त करके इस वायु ने मुझे अच्छी तरह देख लेने का अवसर दे दिया है ॥ २७ ॥

प्रभावती—( थोड़ी देर ठहर कर ) ( निःश्वास लेती हुई ) मेघ के आगमन से उत्पन्न घबराहट के चलते, मैं काफी परेशान हो गई हूँ।

कुमार—( कातरतापूर्वक ) यही बात है।

चञ्चल वक्षःस्थल हार को फेंककर श्वास के निर्गम को रोक रहा है, जङ्घाद्वय कम्प के कारण बोझिल हो रहे हैं इस प्रकार इस मेघ ने प्रभावती के प्रति कौन सा अपकार नहीं किया है ॥ २८ ॥

और—इस सुन्दरी को द्रुतगति के कारण जलार्द्र वस्त्र के जघन तथा चरणोंमें लिपट जाने से चलने में बाधा पड़ रही है, और इसको देह

तनुस्तनुतरोदरी स्फुटमुरीकरोत्युन्नमत्-
पयोधर महीधरोद्वहनखिन्नतामुन्नताम् ॥ २९ ॥

प्रभावती—( पुनरपि त्वरितं पराक्रामति )

तरलिका—( विभाव्य ) सहि मा क्खु मा क्खु तुरिअं परिक्कमेहि आवण्णसत्ताऽसि दाणिं । तुम अणु अम्पि आआसआरणं एत्थ परिहरीअदि । ( सखि, मा खलु मा खलु त्वरितं परिक्रम्य । आपन्नसत्त्वाऽसीदानीं त्वम्, अणु अपि आयासकारणमत्र परिह्रियते । )

कुमारः—( सातङ्कम् ) सत्यमाह तरलिका । तदहमेव गत्वा निषेधयामि प्रियतमाम् । ( इत्यग्रतो गत्वा सप्रतिषेधम् ) अलमलमेतावता प्रयासेन, यतः—

स्तनजघनकचरीदृग्भारः पुरः परमो गुरु
र्यदि परमपि प्रोक्ते विश्रान्तयैव सखीजनः ।
तदिह चतुरे सञ्चारोऽयं त्वरातरलो यथा
सुतनु न तथा धारान्धारा पराभवकारणम् ॥ ३० ॥

---

उन्नत पयोधर के भार को वहन करने मे खिन्नता का अनुभव सा कर रही है ॥ २९ ॥

प्रभावती—( फिर तेजीसे चलती है )

तरलिका—( देखकर ) सखि, इतनी तेजी से मत चलो । तुम इन दिनों गर्भिणी हो, इस अवस्था में थोड़े से परिश्रम से भी परहेज किया जाता है ।

कुमार—( आतङ्कित होकर ) तरलिका ठीक कह रही है । मैं ही जाकर प्रियतमा को तेज चलने से रोकता हूं । (ऐसा सोचकर आगे जाकर रोकता हुआ) इतना परिश्रम मत करो, क्योंकि—

तुम्हारे ऊपर स्तन जघन, केशपाश, एवं नयनों का विशाल भार है, उस पर से सखी भी मना कर रही है, तुम्हारा यह शीघ्र सञ्चरण उतना कष्टकर न भी होता, यदि यह जलधारा पराभव का कारण नहीं होती ॥ ३० ॥

अपि च—

धीरन्धेहि पदे विधेहि न मदे मग्नं मरालीकुलं
प्रोत्कम्पाकुलितोरु किं कतयसे रम्भासु दम्भार्पणम्
क्षोभोच्छ्रितपयोधरे किमधिकं धत्से गिरीन् गौरवे
किञ्चिश्वासमलीमसौष्ठि कुरुषे बिम्बावलम्बास्विषः ॥३१॥

प्रभावती—( तिर्यक्स्थित्वा ) ( सकोप तरलिकामीक्षते )

तरलिका—( स्मित्वा ) अग्गदो भोदु महाभाओ । ( अग्रतो भवतु महाभागः । )

कुमारः—यदादेक्ष्यति भवती ( इति परिक्रामति )

कुमारः—इत इतो भवती । इयमिय क्रीडापर्वत प्रासादरत्नसोपान-श्रेणी ( इति सर्वे सोपानारोहण नाटयन्ति )

कुमार —इय हि—

संसिक्ता मृगमदकुङ्कुमोपलिप्ते

---

और—तुम धीरे धीरे पग रखो, अन्यथा ये मरालीगण ( तुम्हें तेज चलती देखकर अपने को विजयी मानकर ) मदमत्त हो उठेंगी, तुम्हारी जांघें कम्प से आकुल हो रही हैं इस प्रकार तुम कदली वृक्ष को अभिमानान्वित क्यों कर रही हो ? तुम्हारे सवेग सञ्चरण से तुम्हारे स्तन कम्पायमान हो रहे हैं, इस प्रकार तुम पर्वतों को क्यों गौरव प्रदान कर रही हो ? तुम्हारे ओठ निःश्वास से मलिन हो रहे हैं, और उसके चलते तुम बिम्बफल को कान्ति का आश्रय क्यों सिद्ध करने जा रही हो ॥ ३१ ॥

प्रभावती—( घूमकर ) ( क्रोधपूर्ण दृष्टि से तरलिका को देखती है )

तरलिका—( मुस्कुराकर ) महाभाग, आगे आइये ।

कुमार—आपका जो आदेश हो । ( चलता है )

कुमार—( प्रभावती से ) प्रिये इधर से आओ । यही है क्रीडापर्वत-प्रासाद की रत्ननिर्मित सीढी । ( सभी सीढी पर चढने का अभिनय करते हैं )

कुमार—यहा के पत्थर कस्तूरी एवं कुङ्कुम से लिप्त होने के कारण पग-

सोपाने प्रतिपदपिच्छिला शिलाली ।
एतस्याममिनवपल्लवश्लथाभ्यां
पदभ्यां ते सुतनु सुदुष्करोऽधिरोहः ॥ ३२ ॥

प्रभावती—( पदान्तरे स्खलनन्नाटयति )

कुमार —अहो प्रमादः ।

सोपानेऽस्मिन् पयोभिः प्रणयिनि पतितैः पिच्छिले विस्खलन्ती
मामालिङ्ग्य व्रजेति प्रियजन विधिना नाधुना वक्तुमीशे ।
मत्पाणौ पाणिपाथोरुहमपि सरले सन्निधायार्पयन्ती
स्वैरं स्वैरं पदानि प्रगुणय जगतीयौवराज्यं स्मरस्य ॥ ३३ ॥

( इति प्रभावत्या करतलमागृह्णाति )

प्रभावती—( सकोप हस्तमाच्छिद्य ) ( तरलिकामवलम्ब्य परिक्रमति )

कुमार —( सवैलक्ष्यस्मितम् परिक्रम्य ) अयमयं क्रीडापर्वतप्रासादः । तदत्र प्रविशाम । ( इति सर्वे प्रवेशान्नाटयन्ति )

---

पग पर पिच्छिल है, अपने इन पल्लव-सुकुमार चरणों से तुम्हारे लिये इस सोपान परम्परा पर आरोहण करना कठिन है ॥ ३२ ॥

प्रभावती—( एक पग चलकर गिरने का अभिनय करती है )

कुमार—बहुत भारी भूल हो रही है ।

तुम इस सोपान परम्परा पर—जो गिरे हुए जल से पिच्छिल है—गिर जाओगी, अत मेरा आलिङ्गन करके चलो, इस तरह से पहले की तरह इस समय मैं कह नहीं सकता हूं, फिर भी तुम अपना हाथ मेरे हाथ में रखकर धीरे धीरे चलो, जिससे कामदेव के जगतीयौवराज्य का समर्थन हो ॥ ३३ ॥

( प्रभावती का हाथ पकड़ लेता है )

प्रभावती—( सकोप हाथ छीनकर ) ( तरलिका का अवलम्बन लेकर चलती है )

कुमार—( लज्जा तथा मुस्कुराहट के साथ चलकर ) यही है क्रीडा-पर्वत प्रासाद । हम इसमें प्रवेश करें । ( सभी प्रवेश करते हैं )

कुमारः—( अङ्गुल्या निर्दिशन् ) अयि प्रियतमे,

वातायनेऽस्मिन्नासीना नवीनाम्भोधरानधः ।
विलोकय जलासार-सम्भारमयमम्बरम् ॥ ३४ ॥

प्रभावती—( अनादृत्यान्यतः समुपविशति )

कुमारः—( उपसृत्य ) अयि प्रभावति,

साधारणैः परिजनैः किमुपासनीयं
तद् दूरतो निहितमासनमाश्रयामि ।
त्वत्सन्निधौ तरलिकैव कुतोऽपि किंवा
संवाहकश्चरणयोरनयोर्विशामि ॥ ३५ ॥

तरलिका—( सस्मितम् ) आणवेदु एद कुमारस्स पिअसही । ( आज्ञापयत्वेतत् कुमारस्य प्रियसखी । )

प्रभावती—( कोपोत्तरल तरलिकामीक्षते )

तरलिका—( सकृतकक्रोधम् ) ( कुमारस्य पुरतो हस्त प्रसार्य ) लब्भदि महाभाएण एत्थ ओआसो । ( लभ्यते महाभागेनात्रावकाश । )

---

कुमार—(अङ्गुलीद्वारा इशारा करते हुए) हे प्रियतमे, तुम इस खिड़की के सामने बैठकर नवीन मेघो के नीचे जलधार से भरे हुए इस आकाश-मण्डल को देखो ॥ ३४ ॥

प्रभावती—( अनादर करके दूसरी ओर बैठती है )

कुमार—( समीप जाकर ) हे प्रभावती,—

साधारण परिजनों के बैठने के लिये डाला गया वह आसन मैं ग्रहण कर लूं, तुम्हारे पास तरलिका ही रहे। अथवा—( यदि अनुमति दो तो ) तुम्हारे चरणों को दबाता हुआ मैं यहीं बैठ जाऊ ॥ ३५ ॥

तरलिका—( मुस्कुराकर ) प्रियसखी कुमार को इसके लिये आज्ञा दे दो।

प्रभावती—( कोपपूर्वक तरलिका को देखती है )।

तरलिका—( बनावटी कोप के साथ ) ( कुमार को ओर हाथ फैलाकर ) आपको यहां स्थान मिलता है।

कुमारः—( सापराधस्मितम् ) सखि तरलिके,

स्वप्नेऽपि सापराधेऽस्या निग्रहो मय्यनुग्रहः ।
अनाचारातिक्रमेणनन्नु नहि मन्तुमहं क्षमः ॥ ३६ ॥

तरलिका—( जनान्तिकम् ) सुदो मो क्खु सिविणअवुत्तन्तो कुमारेण । ( प्रकाशम् ) भट्टिदारिए तए ज्जेव अत्तणो जीविदादो वल्लही-अदुअ वड्ढाविओ जणो क्खु अम्हाण वअणं पमाणीकरेदु तासअज्जेव पिअसहीं णिवारेदु । ( श्रुतः स खलु स्वप्नवृत्तान्तः कुमारेण ? भर्तृदारिके त्वयैव आत्मनो जीवितात् वल्लभीकृत्य वर्धितो जनः कथमस्माकं वचनं प्रमाणीकरोतु तद् स्वयम् एव प्रियसखीं निवारयतु । )

प्रभावती—( लज्जया तिष्ठति )

कुमारः—यदि पुनरनेकशो विफलमपि स्वप्नदर्शनं दुष्फलोदर्कमिति तर्कयति भवती, तत्रापि

नान्तःपुरमभिभयोदयमन्तरेण
प्रिये तव प्रहरणग्रहणं करिष्ये ।

---

कुमार—( सापराधभाव से सहास ) सखि तरलिके, यदि स्वप्न में भी मुझ से अपराध हो जाता था, तो मैं इसके द्वारा दिये गये दण्ड को अनुग्रह मानता रहा हूँ, किन्तु इस औद्धत्यपूर्ण अपराध को तो मैं मानने में भी अपने को असमर्थ पा रहा हूँ ॥ ३६ ॥

तरलिका—( छिपाकर ) क्या कुमार ने स्वप्नवृत्तान्त सुन लिया है ? ) ( प्रकट ) राजकुमारि, जिसे तुमने अपने जीवन से भी अधिक प्रिय बनाकर बढ़ावा दे रखा है, भला वह हमारी बातों पर क्यों ध्यान दे ? अतः तुम स्वयं कुमार को रोको ।

प्रभावती—( चुप रहती है )

कुमार—अनेक बार विफल होने वाले स्वप्नदर्शन को भी यदि तुम दुष्फलदायी मान रही हो, तो मैं तुमको वरदान देता हूँ कि जब तक अन्तःपुर पर कोई भय नहीं आ जाता है तब तक मैं तुम्हारे शिरों पर शस्त्र नहीं

किञ्च त्वयानभिहितस्तमहं न हन्ता
किन्ताम्यसि त्वयि वयं वरमर्पयामः ॥ ३७ ॥

प्रभावती—( रोदिति )

तरलिका—( कुमार हस्तसञ्ज्ञया व्याहरति )

कुमार—( शनैः समीपे समुपविश्य उत्तरीयाञ्चलेन नेत्रे प्रभावत्याः प्रमार्जन् )

प्रिये, प्रमादः कतरस्तवायं माने मनो येन मुधा व्यधायि ।
अनेन लब्धप्रसरेण मुग्धे सीदन्ति सौजन्यधनास्तरुण्यः ॥ ३८ ॥

( तस्या कबरीभारमामृशन् )

यदि कथयसि कान्ते वारितान्तर्दुरन्तं
चिकुरनिकरमेनं तन्वि ते संवृणोमि ।
उपरि विपरिकीर्णः कर्णपर्यावलम्बी
विकलयति किलायं कोमलामंसपालीम् ॥ ३९ ॥

प्रभावती—मा क्खु मा क्खु ( इति तिर्यगवलोकयन्ती वारयति )

---

उठाऊँगा, और बिना तुम्हारे कहे मैं तुम्हारे पिता को नहीं मारूँगा, तुम क्यों वृथा उदास होती हो ॥ ३७ ॥

प्रभावती—( रोती है )

तरलिका—( कुमार को हाथ के इशारे से कुछ कहती है )

कुमार—( धीरे से समीप में बैठकर चादर की छोर से प्रभावती की आँखें पोंछता हुआ ) प्रिये, यह कैसी गलती हुई कि तुमने अपने मन में व्यर्थ मान धारण कर लिया । इसी प्रकार के मानधारण करने से सुजन रमणियों को कष्ट उठाना पड़ता है ॥ ३८ ॥

( उसके केशपाश को सहलाता हुआ )

हे प्रिये, यदि तुम मानसिक कोप को संवृत करके मुझे आज्ञा प्रदान करो तो मैं तुम्हारे इन केशों को सँवार दूँ । इन केशों के कान पर फैले रहने से तुम्हारे कोमल कन्धों को तकलीफ हो रही है ॥ ३९ ॥

प्रभावती—नहीं नहीं । ( टेढ़ी नजर से देखकर रोकती है )

कुमार—अयि कोपने, ( मा खलु, मा खलु । )

माने मनागपि मनो मलिनं विधाय
शीलोचितं सुमुखि चारु विचारयस्व ।
किन्नाम रोषपरुषान्तरता हिता ते
किंवा नितम्बिनि मयि प्रणय प्रसादः ॥ ४० ॥

अपि च—पश्य निरनुक्रोशे,

शोणं ते नयनं निरीक्ष्य तरुणि त्रासाय मे सर्वतो
रक्ताम्भोजकुलं चलन्मधुकरव्याजाद्विषं वर्षति ।
व्याकीर्णां कबरीमथाम्बरतले श्यामाद्रि वीक्ष्याधुना
गर्जैस्तर्जनमाचरन्ति बहुधा मत्त्वाम्बुदा दुर्मदाः ॥ ४१ ॥

अथ च—हे चण्डि,

यदि निरतिनिशान्तस्त्याज्य एवैष मान
किमिति बत विलम्बालम्बिनी चित्तवृत्तिः ।

---

कुमार—हे कोपशालिनी

मान से अपने मन को तुमने मलिन बना लिया है फिर भी अपने शील के अनुकूल ठीक से विचार तो करो कि क्या तुम्हारे लिये क्रोध से हृदय को कलुषित रखना लाभप्रद है या मुझ पर स्नेहपूर्वक प्रसन्नता प्रकट करना ? ॥ ४० ॥

हे निर्दये, देखो तो—

तुम्हारे नयनों को ( क्रोध से ) रक्तवर्ण देखकर मुझे भयभीत करने के लिये रक्तकमल-समूह चञ्चल भ्रमर के व्याज से विष की वर्षा कर रहे हैं, और तुम्हारे केशपाश को आकाश में बिखरा हुआ देखकर ये मेघ मुझे डराने के उद्देश्य से बारबार गर्जन कर रहे हैं ॥ ४१ ॥

हे चण्डि

तुम्हारा यह क्रोध नितान्त अकारण है अतः यह त्याज्य ही है, फिर इसे छोड़ने में चित्तवृत्ति विलम्ब का अवलम्बन क्यों कर रही है ? मदमत्त मयूर

मदमधुरमयूरध्वानसंतानधन्य-
स्वनितजलदजाले कोऽपि कालः प्रयाति ॥ ४२ ॥

( तरलिका प्रति सोपालम्भम् ) सखि तरलिके, त्वमपि किन्नास्मत्कृते प्रसादयसि प्रियसखीम ?

तरलिका—( सासूयमिव ) अइ महामाणग्गहिले, किं त्ति एत्तिअ विक्खुहिअ पक्खवादा पुणो पुणो उव्वेजेसि महाभाअं। पेक्ख, अणुणअसुहक्खिविअा करेइ माणं मणं सिणीहइए। अणुणीदा अवि ण पसण्णा ता कलङ्किदो पणओ। ( अयि महामानग्रहिले किमित्येतावद् विक्षुभित-पक्षपाता पुनः पुनः उद्वेजयसि महाभागम्। पश्य, अनुनयसुखक्षिप्त्वा करोति मानं मनः स्निह्यति। अनुनीता अपि न प्रसन्नाऽस्तदकलङ्कितः प्रणयः )।

प्रभावती—( सकोपम् ) तुमम्पि संपदं मह दोग्गह दुस्सिआए उअरि प्पहरसि। ( त्वमपि साम्प्रतं मम दुर्ग्रहदूषिताया उपरि प्रहरसि )।

कुमार—मा मैवमस्मदपराधपक्ष एव निक्षिप्यतां तरलिकाव्याहारोऽपि। न पुनरयं तनुरप्यतदपराधहेतुः।

---

के शब्द को प्रवृत्त करने के कारण धन्यवाद के योग्य यह कराल वर्षाकाल उपस्थित है ॥ ४२ ॥

( तरलिका के प्रति, उलाहने स्वर मे ) सखि, तरलिके तुम क्यो नही हमारी तरफ से प्रिय सखी को मनाती हो ? ।

तरलिका—( असूया के साथ ) हे महामानिनि क्यो इस प्रकार से बिगड़ कर महाभागको पुन पुन उद्विग्न कर रही हो ? देखो अनुनय सुख का परित्याग करके मान किया जाता है परन्तु मानसिक स्नेह बना रहता है। अनुनय करने पर भी जो मानवती प्रसन्नता नही प्रकट करती है वह प्रणय को कलङ्क लगाती है ॥

प्रभावती—( क्रोधपूर्वक ) तुम भी मुझ दुराग्रहदूषिता पर प्रहार कर रही हो ?

कुमार—नही नही, तरलिका के कथन को भी हमारे अपराध के पक्ष मे न डाला जाय। इसमें इसका थोडा भी अपराध नही है।

प्रभावती—एवण्णेदम् । अज्ज‌उत्त-गोवइआ ज्जेवएसा एआरिसाइं वाहरदि । ( एवं न्विदम्, आर्यपुत्र-गोपिता एव एषा एतादृशानि व्याहरति )।

तरलिका—( विहसन्ती ) सहि सहिस्सं दाव एदं तुम उण अम्ह अहिक्खेवक्खरेण विकरेहि अत्तणो वल्लहेण सलावन्ति । ( सखि सहिष्ये तावदेतत्, त्व पुनरस्मान् अधिक्षेपाक्षरेण विकिर आत्मनो वल्लभेनालपन्ती )।

प्रभावती—( स्मितमधुरमधोमुखी तिष्ठति )।

कुमार—( सानन्द प्रभावती पाणौ गृहीत्वा ) प्रिये नामुना वातायनेन सुखावलोकनीया प्रावृषो लक्ष्मी, तदुत्तुङ्गामिमां वेदिकामारुह्य वैदूर्यवातायनेनावलोकयामः।

( इत्युत्थाय सर्वे वेदिकारोहणं नाटयन्ति )

कुमारः—( समन्तादवलोक्य ) कथमुपशान्तालोकः सर्वतो भूलोकः ! तथाहि—

आत्मानमासारमयेऽन्तरीक्षे दुर्वारनिर्वापणमीक्षमाणः ।
पूर्वाचलप्रान्तगुहागृहान्तः प्रायः परावृत्य रविः प्रविष्टः ॥ ४३ ॥

---

प्रभावती—यही बात है कि आपके द्वारा रक्षिता होकर ही यह ऐसी बातें कहती है।

तरलिका—( हँसती हुई ) सखि, मैं यह सहलूंगी, तुम मुझ पर तिरस्कार की वर्षा कर लो, परन्तु अपने प्रियतम से बातें करती हुई।

प्रभावती—( मुस्कुराकर मुह नीचा कर लेती है )

कुमार—( सानन्द, प्रभावती का हाथ पकड कर ) प्रिये, इस खिडकी से वर्षाऋतु की शोभा अच्छी तरह नहीं दीखती है, अतः इस ऊंची वेदी पर चढ़ कर हम लोग इस वैडूर्यमणि की खिडकी से वर्षा की शोभा का अवलोकन करें।

( उठकर सभी वेदी पर चढने का अभिनय करते हैं )

कुमार—( चारों ओर देखकर ) पृथ्वी पर सभी ओर प्रकाश शान्त हो रहा है। क्योंकि—जब सूर्य ने देख लिया कि आकाश की जलवर्षा से मुझे बुत जाना पडेगा ही, तब वह पूर्वाचल प्रान्तवर्ती गुफारूप घर के भीतर प्रवेश कर गये ॥ ४३ ॥

अहो महोन्नतारम्भोऽयमम्भोधरोऽन्धकारः। तथाहि—

अम्भःसम्भारभीत्या सवितरि निभृतं वैरिणि व्योमवक्रा-
न्निष्क्रान्ते गर्जितोर्जस्वनविजयबलात्कार ढक्कारवस्य।
केकावेशापदेशाद्द्विजवरवदनोद्गीर्ण-पुण्याह-धन्यं
धारासारैरुदीते तिमिरनरपतेरेष राज्याभिषेकः॥ ४४॥

प्रभावती—( विलोक्य सकौतुकम् ) अज्जउत्त, णिब्भिज्जन्त-कज्जल-महीहर-सिहरमणोहरे पओहरे पुणो पुणो पज्जलिअविप्फुरन्ती विज्जुआ ह्मत्ति आहरइ हिअआइं। ( आर्यपुत्र, निभिद्यमान-कज्जलमहीधरशिखरमनोहरे पयोधरे पुनः पुनः प्रज्वलितविस्फुरन्ती विद्युत् झटित्याहरति हृदयानि।)

कुमारः—( सोपालम्भम् )

हरिद्राहृद्याङ्गि स्मरसमरतारुण्यतरला
मदङ्के चेत् पङ्केरुहमुखि रहस्त्वं विहरसि।
मनागप्युन्माद्यन्मुदिर-परिरब्धा कथमसौ
तदा सौदामिन्या हरति हृदयानन्दिनि मनः॥ ४५॥

---

मेघ का यह अन्धकार बड़ी उन्नति करता जा रहा है,

जलवर्षा से डरकर सूर्यरूप वैरी चुपचाप जब आकाशरूप राज्य से भाग खड़े हुए तब वहाँ अन्धकार-नामक विजयी नृप का राज्याभिषेक हो रहा है, मेघ का गर्जन विजय की सूचना देने वाला बाजा है, मयूर की वाणी ब्राह्मणों के मुख से निकलने वाले पुण्याह शब्द हैं, और जल की धारा जो बरस रही है वह अभिषेक-स्नपन हो रहा है॥ ४४॥

प्रभावती—( देखकर कौतुक से ) आर्यपुत्र, टूट कर गिरते हुए कज्जल-पर्वत के शिखरों के समान प्रतीत होने वाले मेघ में पुनः पुनः प्रज्वलित होकर चमकने वाली विद्युल्लता हृदय को आकृष्ट करती है।

कुमार—( उलाहने के स्वर में )

हे हरिद्रावर्ण अङ्ग धारण करने वाली सुन्दरी, काम-युद्ध में यौवन की चञ्चलता प्रकट करने वाली तुम यदि एकान्त में मेरी गोद में विहार करने लगती हो, तब उठते हुए मेघ से आलिङ्गित वह विद्युल्लता किसी प्रकार भी हृदय को आकृष्ट नहीं करती है॥ ४५॥

प्रभावती—( सलज्ज स्मितम् ) अज्जउत्त, किण्णिमित्तं विज्जुआ झत्ति सघडिअ विहडेइ । ( आर्यपुत्र, किं निमित्तं विद्युत् झटिति संघट्य विघटति । )

कुमारः—( सहास प्रभावतीं परिष्वज्य )

मदुरसङ्गासङ्गस्फुरितरुचिमालोक्य भवतीं
हसन्तीं हारिद्रद्रवनवनदीमञ्जनगिरेः ।
घनक्रोडक्रीडातरलमियमात्मीयमफलं
वपुर्विद्युद्वल्ली विघटयति भूयो घटयति ॥ ४६ ॥

तरलिका—( सोत्प्रेक्षम् ) अहं उण एव्वं जाणेमि—( अहं पुनरेवं जाने )

दठ्ठुण चिउरणिअरं तुहोअ दूराहि लम्बिअमपइण्णं ।
तडिअमिसा जलआणं तडित्ति विहडन्ति हिअआइं ॥ ४७ ॥
( दृष्ट्वा चिकुरनिकरं भवत्या दूराल्लम्बितमभिन्नम् ।
तडिन्मिषाज्जलदानां तडिति विघटन्ति हृदयानि ॥ ४७ ॥ )

प्रभावती—तरलिए, तुमम्पि सपदं उपेक्खकवित्तणे पविट्ठिआसि । ( तरलिके, त्वमपि साम्प्रतमुत्प्रेक्षाकवित्वे प्रविष्टासि । )

कुमार —साधु तरलिके, साधु, एवमेतत् ।

---

प्रभावती—( लज्जा तथा हँसी के साथ ) आर्यपुत्र, क्यों यह विद्युल्लता मेघ से लिपट कर फिर अलग हो जाती है ?

कुमार—( हँसते हुए प्रभावती का आलिङ्गन करके ) कज्जल पर्वत पर अवस्थित हरिद्रा रस की नदी की तरह जब तुम मेरी गोद में चमकती रहती हो, तब हसती हुई तुमको देख कर विद्युल्लता मेघ की गोद में क्रीडा करते हुए अपने शरीर को विफल मान कर बार बार उसे मेघ से अलग करती तथा संयुक्त करती है ॥ ४६ ॥

तरलिका—( उत्प्रेक्षा करती हुई ) मुझे तो ऐसा प्रतीत होता है—

खुले हुए तथा लम्बमान तुम्हारे इन केशपाशों को देखकर मेघों के हृदय तड़तड़ करके फट पड़ते हैं वही यह विद्युल्लतायें होती हैं ॥ ४७ ॥

प्रभावती—तरलिके तुम भी अब उत्प्रेक्षा पूर्ण कविता करने लगी हो ?

कुमार—ठीक कहती हो तरलिके, यही बात है ।

पतस्याः कवरीभिरम्बरतल व्यालम्बिनाभिर्वला-
दाक्रम्यापहृतासु दुर्भगतराः सम्पत्सु पाथोधराः ।
तत्तालस्तनितार्दनादविधुराण्यश्रूणि भूयस्तरा-
ण्यासारान् विसृजन्ति विस्फुरतडिद् व्याजस्फुटद्वक्षसः ॥४८॥

प्रभावती—( अन्यतोऽवलोक्य ) निरन्तरासारसम्भारसंभरिज्जन्त-सरोवरन्तर निमज्जन्त-पङ्कजन्तरुद्गमोण-भमरभंकार-सकलिद-कमलिनी-दल-त्ताडिज्जन्त-सलिलसद्द सम्मद्द-बहुलो पज्ञोइअदु कमलवणो ।
(निरन्तरासारसम्भारसम्भ्रियमाणसरोवरान्तर्निमज्जत्पङ्कजान्तरुद्भिन्न भ्रमरझंकार-सङ्कलित-कमलिनीदलताड्यमान सलिलशब्द सम्मर्द-बहुलं प्रलोक्यतां कमलवनम् )।

कुमारः—( विहस्य ) इदमित्थमवलोकयामि ।

त्वन्नेत्रेण जिताऽप्यगाधसलिले मज्जन्ति लज्जाम्बरै-
रुद्भ्राम्यद्भ्रमराणि सम्प्रति सरोजानीनि जानीमहे ।
धारासारपराहताकुलदलव्याजेन पाथोजिनी
सोरस्ताडमहो विहङ्गविरुतै स्नेहोचितं शोचति ॥ ४९ ॥

---

इसके खुले हुए केशों ने आकाश में लटक कर मेघों की सारी शोभा-सम्पत्ति बलपूर्वक आक्रमण करके छीन ली है, मेघ नितान्त दरिद्र हो रहे हैं, इसीलिये बिजली के व्याज से उनके हृदय विदीर्ण हो रहे हैं, और गर्जन रूप आर्त स्वर के साथ जलरूप अश्रुप्रवाह जारी है ॥ ४८ ॥

प्रभावती—( दूसरी ओर देखकर ) निरन्तर जलवर्षा के कारण सरोवर पूर्ण होता जा रहा है, उसमें कमल डूबने जा रहे हैं, डूबते हुए कमलों से बाहर निकलने वाले भ्रमरगण झंकार कर रहे हैं कमलिनी के पत्तों से ताड़ित जल के शब्द के साथ मिलकर भ्रमर के झंकार-समर्द उठा रहे हैं, इस प्रकार से यह सरोवर देखने के योग्य हो रहा है इसे देखिये ।

कुमार—( मुस्कुराकर ) मैं तो इसे इस तरह देखता हूँ । तुम्हारे नयनों से पराजित कमलगण से अगाध जल में डूब रहे हैं, निराश्रय भ्रमर चक्कर काट रहे हैं, धारावृष्टि से ताडित पत्र के व्याज से कमलिनी छाती पीटकर रो रही है, तथा पक्षियों के कलरव द्वारा अपना शोक व्यक्त करती जा रही है ॥ ४९ ॥

( अन्यतोऽवलोक्य )

इतो वातव्रातव्यतिकर तिरःकम्पितशिरः-
स्फुरज्झंझाकारस्वर-मुखर कान्तार तरवः ।
प्रदेशाः प्रोत्तुङ्गक्षितिधर विनिर्गत्वरझर-
प्रपातप्रध्वंसोपलशकल वित्रस्त विहगाः ॥ ५० ॥

अपि च—

पवनैः प्रकम्पितवनैर्वेलिता
विकसत्कदम्बशत संवलिताः ।
घनशैलशाद्वलवलत्सरित
शबलीभवन्ति हरितः परितः ॥ ५१ ॥

( श्रुतिसुखमभिनीय )

ताण्डवोन्मद मयूर मण्डली मण्डलीकृतशिखण्डमण्डना ।
नीलशाद्वलविशालमेखलोन्मेषलोलपवना वनावली ॥ ५२ ॥

प्रभावती—अज्जउत्त, गज्जन्त णिविड जलअर लोअणोहिल्लसमु-
त्ताण लोअणसुह-समुण्णामिअग्गीवमुम्मिल्ल-केकाणुकार-विरअन्तरम्मह-

---

( दूसरी ओर देखकर )

हवा के सम्पर्क से वृक्षों के ऊपर के हिस्से कांप रहे हैं, झझावात के स्वर से वे मुखर भी हो रहे हैं, ऊंचे पर्वतों से निकलने वाले निर्झर के प्रपात से प्रस्तर-खण्डों पर उत्पन्न होने वाली ध्वनि से पक्षीगण भयभीत हो रहे हैं ॥ ५० ॥

हवा से हिलते हुए वनों से, विकसित शतशतकदम्ब तरुओं से, और हरे भरे पर्वत पर प्रवहमान नदियों से दिशायें परिपूर्ण हो रही हैं ॥ ५१ ॥

( श्रवणसुख का अभिनय करके )

वनावली में ताण्डवपरायण उन्मदमयूर अपने पुच्छ को मण्डलाकार बनाये हुए हैं, और हरे घासफूस से भरी भूमिवाले स्थलपर हवा खेल रही है ॥ ५२ ॥

प्रभावती—आर्यपुत्र, गरजते हुए घने मेघों को देखकर लोचन सुख से

वलकार-हक्काविअगोवीमण्डलन्तर-तण्डविणा सिहण्डिणा मण्डली-कदो एस कलावो विकिण्ण वल्लोअदि। (आर्यपुत्र, गर्जन्निविडजलधर-लोकनकमितोत्तानलोचनसुख समुन्नमितग्रीवमुद्गीर्णं केकानुकार विहृतान्तरं महावलत्कारकारित गोपीमण्डलान्तर ताण्डविना शिखण्डिना मण्डलीकृत एष कलाप विकोर्णोऽवलोक्यते।)

कुमारः—(सोपेक्षम्)

तव नउकवरीभिर्यैकधाऽनेकवारं
कमलमुखिकलाप र्कािकमाङ्केन वर्ण्यं।

अथवा वर्णनीय एवायम्—

गुणव तनवधीदर्गविप्रतीपप्रयुक्तं
परिभवमपि मन्ये पुण्यभाजो भजन्ति॥ ५३॥

(प्रविश्य)

परभृतिका—(प्रणम्य) भट्टिदारिए, चन्दवदी गुणवदीओ पणमिअ विण्णवेन्ति, अज्ज अम्हाण केलीहर कुमार पज्जुण्ण सणाहाए भट्टिदारिआए आअच्छिअ ज किम्पि दोहलअ अहिलहीअदि सस्सि वजेव करीअदुप्पसादो त्ति। (भर्तृदारिके, चन्द्रवतीगुणवत्यौ प्रणम्य विज्ञापयतः,

---

गर्दन उठाये केका शब्द करते हुए पुकारनेवाली गायियों के बीच ताण्डवनृत्य करते हुए मयूरगण के मण्डलाकार पुच्छ बिखरे दीख रहे हैं॥

कुमार—(उपेक्षा से) मयूर के जिन कलापों को तुम्हारे केशपाश ने अनेक बार पराजित किया है उनका वर्णन कौन करे? अथवा—इनका वर्णन होना ही चाहिये, गुणाधान की तरह ऐसे श्रेष्ठ विरोधिजन द्वारा प्रस्तुत पराभव प्राप्त करना भी पुण्य का फल होता है॥ ५३॥

(प्रवेश करके)

परभृतिका—राजकुमारी, चन्द्रवती तथा गुणवती ने प्रणामपूर्वक निवेदन किया है कि आज हमारे केलिगृह में कुमार प्रद्युम्न के साथ आकर प्रभावती

अद्यास्माकं केलीगृहं कुमारप्रद्युम्नसहायया भर्तृदारिकया आगत्य यद् किमपि दोहदकमभिलष्यते तस्मिन्नेव क्रियता प्रसाद इति ।)

प्रभावती—( लज्जते )

तरलिका—भट्टिदारिए, आमन्तिदासि बन्धवाचारविहिणा बहिणिआहिं ।( भर्तृदारिके, आमन्त्रितासि बान्धवाचारविधिना भगिनीभ्याम् ।)

परभृतिका—ण केवलं आमन्तिदा, किं उण आआरिदा वि। (न केवलमामन्त्रिता किं पुनराकारितापि ।)

कुमार—सर्वथानुल्लङ्घनीयोऽयं भगिन्योरभिलाषः।

प्रभावती—( सलज्जस्मितम् ) परहुदिए, ऋज्जुअं ज्जेव किं ण भणासि सगन्ति दोहलअं बहिणि आओसि । ( परभृतिके, ऋजुकमेव किं भणसि यावतो दोहदकं भगिन्याविति ।)

परभृतिका—( स्मित्वा ) एदं भट्टिदारिआए भणिदव्वं । ( एतद् भर्तृदारिकया भणितव्यम् ।)

कुमारः—(सानन्दम्) उभयमपि एतदभिनन्दनीयं यदुकुलस्य । तदलं विलम्बेन । संप्रत्येव संपादयामः परभृतिकाप्रार्थ्यमालमर्थं यदयमुपशान्तो घनासारः । तथाहि—

---

जो कुछ दोहद अभीष्ट हो उसे स्वीकार करें ।

प्रभावती—( लज्जित हो जाती है )

तरलिका—राजकुमारी, बान्धवाचार के अनुसार बहनों ने बुलाया है ।

परभृतिका—केवल बुलाया ही नहीं है अनुरोध भी किया है ।

कुमार—बहनों का यह अनुरोध सर्वथा अनुल्लङ्घनीय है ।

प्रभावती—( सलज्ज भाव से मुस्कुराकर ) परभृतिके, सीधे यह क्यों न कहती हो कि बहनें दोहद की इच्छा करती हैं ।

परभृतिका—( हँसकर ) यह तो आप कहें ।

कुमार—( सानन्द ) दोनों बातें यदुकुल के लिये प्रसन्नता की हैं । विलम्ब करने की आवश्यकता नहीं है । परभृतिका द्वारा प्रार्थित वस्तु का हम अभी सम्पादन करें । वर्षा भी रुक गई है ।

शमितसलिलबिन्दुबाणवर्षः
स्खलिततडित्करवालदुर्भगाशः ।
रविकिरणकृपाणपाट्यमानः
प्रतिभटवत्परिभूयते पयोदः ॥ ५४ ॥

( इति निष्क्रान्ताः सर्वे )

केलीशैलो नाम षष्ठोऽङ्कः ।



---

जलबिन्दु रूप बाण की वर्षा शान्त है, बिजलीरूप तलवारों का दिशाओं में चमकना बन्द है, सूर्य की किरणरूप कृपाण से विदारित शत्रुस्वरूप मेघ पराभूत हो रहा है ॥

( सभी जाते हैं )

केलीशैल नामक छठा अङ्क समाप्त

## सप्तमोऽङ्कः

[ ततः प्रविशति दैत्यपुरोधा ]

दैत्यपुरोधा —( आकाशे कर्णं दत्वा ) किं ब्रवीषिसमन्ततः समासन्ना सुरसामन्तवर्गः स्वर्गादिसर्वलोकविजययात्रा मुहूर्त्तमङ्गलेभ्यो भवन्तमपेक्षते परमेश्वर इति । ( सवैचित्र्यम् ) कथमुल्लङ्घितो देवेन भगवतो दाक्षायणीभर्त्तुरादेश. ? तद्गच्छ, विज्ञापय महाराज भयमहमागत इति ।

( परिक्रामन्, सचिन्तोद्वेगम् )

यस्यैताः श्रुतयश्चरन्त्यनुचरीभूता किमेनावता
यस्याज्ञां चिरमाचरिष्णुरकरोद्विष्णुस्तनुं वामनीम् ।
तद्वाग्ब्रह्म विलङ्घयन् जनयितुर्जम्भद्विषं विद्विषन्
देव. किम्न बिभेति शान्तमथवा ब्राह्मो न जिह्मोवर. ॥ १ ॥

---

[ दैत्य पुरोहित का प्रवेश ]

दैत्यपुरोहित—( आकाश की ओर कान लगाकर ) क्या कह रहे हो, समस्त असुर योद्धागण के साथ हमारे महाराज स्वर्गादि सकल लोक की यात्रा के समय मङ्गल अनुष्ठान के लिये हमारी अपेक्षा कर रहे हैं । ( आश्चर्य के साथ ) हमारे महाराज ने भगवान् मरीचि के आदेश का कैसे उल्लङ्घन कर दिया ? अच्छा चलो, महाराज से निवेदन करो कि मैं अभी आरहा हूँ।

( चलता हुआ चिन्ता तथा उद्वेग के साथ )

जिस भगवान् मरीचि के आगे श्रुतियाँ दासी बनी रहती है, इतना ही नहीं, जिन की आज्ञा के पालन मे अनुरक्त विष्णु ने वामनरूप धारण किया, उन्ही पितृदेव के वचन का उल्लङ्घन कर रहे हैं । हमारे महाराज इन्द्र के शत्रु बनकर, फिर भी उन्हे अपने पूज्य पितृदेव की आज्ञा टालने मे भय नही हो रहा है, अथवा ब्रह्मा का वरदान मिथ्या नहीं हो सकता है ॥ १ ॥

( पदान्तरे दुर्निमित्तान्यनुभूय ) अहो महोत्पातानामुपनिपातः । तत्कि-मेतत् ? अथवा किमन्यत्, पर्यवसितप्रायाः प्रायशो दैत्यकुलविभूतयः । ( सखेदोपालम्भम् )

हा धातः कतमस्तवैव विषमः स्वाङ्गीकृते व्युत्क्रमः ?
तावानद्य तिरोहितः कथममूद्भूतेषु भीतेर्भरः ।
ये बिन्दूनपि वारिणो न विकिरन्त्याज्ञामृते भूपते
स्तेऽमी रेणुघनामसृग्द्रवकणान्वर्षन्ति पाथोधराः ॥ २ ॥

अपि च—

यानेव क्षणमीहते क्षितिपतिर्दूरादनन्यस्पृश-
स्तानेवापनयन्ति ये परिमलानावासभूमीरुहाम् ।
क्षिप्तोत्पातिपताकमाकुलचलोद्भग्नाभिरामद्रुमं
तेऽमी हन्त समीरणाः प्रविकिरन्त्युच्चैस्तरां शर्कराः ॥३॥

किञ्च—

गातुं नाप्सरसां गणोऽपि लभते यत्प्राङ्गणोपाङ्गनं
घोरास्तत्र शिवा निराकुलमिवाक्रन्दन्त्यमन्दस्वराः ।

---

( एक पग रखते ही दुर्निमित्त का अनुभव कर के ) अहो, महान् उत्पात हो रहे हैं । यह क्या है ? अथवा और क्या हो सकता है दैत्यकुल की समृद्धि समाप्त सी हो रही है । ( खेद एवं उलाहने से भरे स्वर में )

हा ब्रह्मन् , आपके निर्माण में यह भयङ्कर व्युत्क्रम कैसे हो रहा है ? समस्त प्राणियों में वर्तमान भय का साम्राज्य कैसे लुप्त हो गया ? जो मेघ हमारे महाराज की आज्ञा के बिना जलबिन्दु की वर्षा भी नहीं करते थे, वही मेघ अब धूल भरे रक्तकण की वर्षा करने लगे हैं ॥ २ ॥

और – हमारे महाराज किसी दूसरे द्वारा अस्पृष्ट जिन सुगन्धों की इच्छा करते थे वे वायु उन्हीं सुगन्धों को गृहसमीपवर्ती उद्यान से ले आकर उपस्थित करते रहते थे, वही वायु आज ध्वजों को गिरा रहे हैं, रमणीय उद्यानवृक्षों को तोड़ रहे हैं और जोरों से कंकड़ की वर्षा सी कर रहे हैं ॥ ३ ॥

जिनके प्राङ्गण के पास अप्सरायें भी गीत गाने के लिये कठिनता से स्थान प्राप्त करती रही हैं वहाँ पर आज यह भयङ्कर सियारिनें मौज में उच्चस्वर

मध्याह्नेऽपि खराः करा न तरणेर्यत्रापतन्मन्दिरे
गृद्ध्रा बद्धरवं पतन्ति परुषं तत्रोद्गिरन्तो गिरः ॥ ४ ॥

अपरञ्चाप्रसक्तपुरुषपरिचयानां कुत्रचिदत्रैव पुरे पुत्रोत्पत्तिः कुमारीणामिति बहुलीभूतं कौलीनमुत्पातपक्ष एव निक्षिपामि । सोऽयमस्माकं स्वस्त्ययनसमयो ब्राह्मणानाम् । ( विचिन्त्य ) धिक्कष्टम् ,

मङ्गलार्थमुपाहूतः कर्त्तुमिच्छामि शान्तिकम् ।
कारयत्यन्यदन्यस्मिन् विधेये विधुरो विधिः ॥ ५ ॥

( परिक्रम्य, समन्तादवलोक्य ) कोऽत्र राजभृत्येषु, समाहूय सद्ब्राह्मणानुपक्रम्यतां शान्तिको विधिः ।

[ नेपथ्ये ]

हन्त, कोऽयं हत विधेरुपक्रमः ?
पुरोधा—( आकर्ण्य, सक्रोधम् ) आः, कोऽय दुर्दुरूटोऽस्मान्निषेधति ?

---

से चिल्ला रहे हैं, जिन के मन्दिर पर दोपहर को भी सूर्य की तीव्र किरणें नही पडती थीं, उन्ही मन्दिरो पर आज भयङ्कर शब्द करने वाले गृद्ध्र गिर रहे हैं ॥ ४ ॥

और मैं पुरुष परिचय के बिना ही इस अन्त पुर मे कुमारी कन्याओ के लडके पैदा हुए हैं। इस बात को भी एक प्रकार का उत्पात ही मानता हूँ। यह अपवाद चारो ओर फैल भी गया है। अब हम ब्राह्मणों के लिये यह स्वस्त्ययन करने का समय है। ( सोचकर ) हाय, कष्ट की बात है ।

मङ्गल करने के लिये बुलाया गया मैं शान्तिकर्म करना चाहता हूँ, परन्तु विरुद्ध भाग्य मुझसे दूसरा ही कार्य करवा लेता है ॥ ५ ॥

( चलकर चारो ओर दृष्टि डाल कर ) अरे यहाँ कौन राजभृत्य है ? सद्ब्राह्मणो को बुलाकर शान्तिकर्म प्रारम्भ करने को कहो ।

[ नेपथ्य मे ]

हाय, विधाता का यह कैसा विधान है ?
पुरोधा—( सुनकर क्रोध भरे स्वर मे ) अरे यह कौन बदमाश हम

( विलोक्य ) किं कुतोऽपि कारणात् कञ्चुकी वात्स्यायनो विघातरमुपालभते, तदिदमेतन्मुखेन वेधसैवप्रतिषिद्धम् ।

( प्रविश्य )

कञ्चुकी—कोऽयमित्याद्युक्त्वा वैचित्य नाटयति ।

पुरोधा—( उपसृत्य ) वात्स्यायन, कोऽयमद्यतनस्ते विषादातिरेकः ?

कञ्चुकी—( क्षण स्थित्वा, नि श्वस्य ) कथयामि पुरोधसे, परन्त्वनाख्येयमिदमर्वाग्दैवदुर्विलसितेभ्य ।

पुरोधा—श्रावय ।

कञ्चुकी—एवमस्तु । अद्य महाराजेन कन्यकामवनायलोकनवर्त्मना विलोचनप्रसादप्रासादवातायनेनाकस्मादेकस्मिन् केलीशैलसन्निवेशे तरलिकापरभृतिकाभ्यामन्त पुरपरिचारिकाभ्यामभ्यासादितकुतूहला कलालापिन कोमलालका येपि बालका त्रयो वयोविशेषेण प्रभा-

---

लोगों को मना कर रहा है । ( देख कर ) किसी कारणवश कञ्चुकी वात्स्यायन ब्रह्मा को कोस रहा है मुझे लगता है कि इसके मुख से ब्रह्मा ही निषेध कर रहे हैं ।

( प्रवेश करके )

कञ्चुकी—यह कौन इत्यादि कह कर घबड़ाहट का अभिनय करता है ।

पुरोधा—( समीप आकर ) वात्स्यायन आज तुम इतने खिन्न क्यों हो रहे हो ?

कञ्चुकी—( थोड़ा रुक कर, साँस छोड़ कर ) कह देता हूँ पुरोहित जी से, परन्तु दुर्दैव के द्वारा अनर्थों के सम्पन्न होने से पूर्व यह वक्तव्य नहीं है ।

पुरोधा—सुनाओ ।

कञ्चुकी—अस्तु । आज महाराज वज्रनाभ ने कन्यान्त पुर देखने के क्रम मे आँखों को प्रसन्न करने वाली अन्त पुर की खिड़कियों से अकस्मात् एक क्रीडापर्वत पर अन्तःपुरदासी तरलिका और परभृतिका के द्वारा कुतूहल में डाले जाते हुए मधुर भाषी घुघराले बालों वाले समान अवस्था तथा सौन्दर्य वाले तीन लडके स्पष्ट भाव से देख लिये । उस समय मैं भी उन

परिवेषेण च स्फुरन्तः स्फुटतरं निरीक्षिताः। ततश्चाहमपि पश्चादासन्न एवासम्। ततश्च कौतुकाश्चर्यरोषपर्यस्तलोचनः परावृत्त्य यावदन्तनिवेशकानाह्वयति तावदहमतिभीतस्ततः कथंचिदपसृतोऽस्मि।

पुरोधाः—( सविस्मयम् ) हुं, भयस्थानमेवैतदन्त पुराधिकारिणाम्। ( विचिन्त्य ) अथवा न केवलं भवतामेव भयस्थानमेतत् किन्तु विश्वेषामेव देवद्रोहिणां यदनेन दानवेन्द्रस्य दूरारोहिणा दुरहङ्कारेण किन्न करणीयम्।

कञ्चुकी—आर्य, अपरिचितपरिग्रहेणेत्यपि वक्तव्यम्।

पुरोधाः—हुं, परिणतप्रायैव प्रायशः पौरुहूतीनीतिः। ( प्रविश्यापटीक्षेपेण ) ( कुब्जकः आत्मनः कर्णनासिके स्पृशन् कञ्चुकिनमुपेत्य ) अज्ज जीआविआ सव्वे वि तुम्हे अम्हेहिं। ( अद्य जीविताः सर्वेऽपि यूयमस्माभिः। )

कञ्चुकी—कथमिव ?

कुब्जकः—रोस परव्वसेन राइणा वावादिदं विनिदिट्ठेसु अन्ते

---

के समीप ही था। इसके बाद महाराज की आंखो मे आश्चर्य, क्रोध एवं कुतूहल भर आये, उन्होंने तत्काल लौट कर द्वारपालो को बुला भेजा, मैं अतिभीत हो कर वहाँ से भाग खड़ा हुआ।

पुरोधा—( विस्मय के साथ ) हु, अन्तःपुराधिकारियो के लिये तो यह भय का स्थान है ही। अथवा—केवल आप लोगो के लिये ही यह भय का स्थान नही है, यह समस्त असुरो के लिये भय का स्थान है क्योंकि दानवेन्द्र के बढे हुए अहङ्कार से क्या न हो जायगा ?

कञ्चुकी—आर्य, यह भी कहना चाहिये कि महाराज को विवाह की बात का ज्ञान नही है। यह भी क्या न कर बैठेगा।

पुरोधा—हुं। प्रायः इन्द्र की नीति सफल हो गई। ( आकर ) ( कुब्जक अपने नाक कान छूता हुआ कञ्चुकी के पास पहुँचकर ) आर्य, आज मैंने तुम सभी लोगो को जिला लिया।

कञ्चुकी—कैसे ?

कुब्जक—क्रोधवशीभूत महाराज ने समस्त अन्तःपुराधिकारियो के वध

उराहिआरिआ पुरिसेसु वेवमाणेण मए पासपरिवत्तिणा हुविअ विण्णविदं । ( रोषपरवशेन राज्ञा व्यापादयितुं विनिदिष्टेष्वन्त पुराधिकारिपुरुषेषु वेपमानेन मया पार्श्ववर्तिना भूत्वा विज्ञापितम् । )

कञ्चुकी—कथमिव ?

कुब्जकः—एव्व ( इति कर्णे कथयति ) ( एवम् । )

कञ्चुकी—ततः किं व्यापारो वज्रनाभः ?

कुब्जकः—खणन्तरे जाणिदव्वं । ( क्षणान्तरे ज्ञातव्यम् । )

कञ्चुकी—गत्वा ज्ञायताम् ।

कुब्जकः—एव्व ( इति निष्क्रान्तः ) ( एवम् । )

कञ्चुकी—( सावेगम् )

विमुद्रयन्तो विपदां विदूराद्द्वाराणि मुग्धा मुदमुद्वहन्तु ।
आसामसाधारण कर्मरक्ष्य. परापरीक्ष्य. पर एव पन्थाः ॥ ६ ॥

अपि च—

निर्माय निर्माय निहन्तु कामो वामो विधिः केन विलङ्घनीयः ।

---

का आदेश दे दिया, तब मैंने कापते हुए उनके पास जा कर कहा—

कञ्चुकी—क्या कहा ?

कुब्जक—इस तरह ( कान मे कहना है )

कञ्चुकी—तब वज्रनाभ ने क्या किया ?

कुब्जक—वह दूसरे समय ज्ञात होगा ।

कञ्चुकी—जा कर पता लगाओ ।

कुब्जक—जो आज्ञा । ( जाता है )

कञ्चुकी—( खेद के साथ )—

विपत्तियो के द्वारो को दूर से बन्द करते हुए मुग्ध जन भले ही खुशियाँ मनाया करें, परन्तु उनका तो अपना कुछ ऐसा मार्ग होता है जिसे कोई नहीं देख पाता है तथा जिसकी रक्षा असाधारण कर्म करते है ॥ ६ ॥

और—बना बना कर बिगाडने की इच्छा रखने वाले विपरीत भाग्य को कौन रोक सकता है ?

अथवा—

दुर्वारगर्वामयमोहभाजामाजानिकं भेषजमेष एव ॥ ७ ॥

( नेपथ्ये साङ्ग्रामिको वादित्रनादः )

पुरोधा —( ससम्भ्रममाकर्ण्य सातङ्कम् )

कोऽयं कर्णोपघाती प्रतिहतपटहग्रामगम्भीरगर्जः
स्फूर्जद्भिः फूत्कारतारध्वनिबहलबलत्कोहलाद्युग्रलोलः ।
प्रेङ्खत्युग्भेव शङ्खस्वनघनगगनप्रान्तरोग्रप्रचारो
द्वारोपासन्न दूरोन्नत मणिवलभीदुन्दुभी भाञ्जिनादः ॥ ८ ॥

अपि च—

दृप्यत्कल्पान्तवातव्यतिकरदलितोन्मूलितोर्वीधरेन्द्र
प्रभ्रंशोद्भ्रान्त पाथोनिधिनिनदमहारक्षेपसंक्षेपदक्षः ।
एकीकुर्वं त्रिलोकीं समुदयतिरवः कोपि कालाग्निज्वाल-
व्याप्तब्रह्माण्डभाण्डस्फुटनघटघटध्वानधिक्कारतारः ॥ ९ ॥

---

अथवा—दुर्वार गर्वरूप रोग से ग्रस्त जनों के लिये स्वाभाविक चिकित्सा यही है ॥ ७ ॥

( नेपथ्य मे युद्ध के बाजे बजते हैं )

पुरोधा—( सभ्रम से सुन कर, भय के साथ )

द्वार समीपवर्ती मणिवलभी मे रक्षित दुन्दुभिगण का कानों को बधिर बना देने वाला, नानाविध वाद्यान्तर के शब्दों को अपने भीतर समेट लेने वाला, फूत्कार की उग्र गर्जना से वर्द्धित कोहल नामक वाद्य के शब्द से भीषण तथा शङ्खध्वनि से भरे आकाश मे प्रचार पाने वाला यह कैसा शब्द हो रहा है ॥ ८ ॥

और—प्रलयकालिक वह्नि की ज्वाला से व्याप्त होकर फूटने वाले ब्रह्माण्ड की घट घट ध्वनि को परास्त करने वाला, कल्पान्त वात से उखाड़े गये पर्वतराज के गिरने से मथित सागर के गर्जन को तुच्छ सिद्ध करने वाला तथा तीनों लोकों को एक करता हुआ—यह कौन भयङ्कर शब्द हो रहा है ॥ ९ ॥

( पुनर्नेपथ्ये )

भोभोः शाखानगरशास्तार सामन्ताः ।

दैत्येशादेशवाचः समसमयसमाक्रान्तदिक्चक्रमेके
प्राकारेभ्य परस्तात् पवनमपि परिनिस्सरन्तं ग्रसन्तु ।
गूढं व्यूढैरनीकैर्गगनतलमलं केपि कुर्वन्तु, केचित्
पातालान्तःप्रविष्टा नृपनगरवरामूलमाच्छादयन्तु ॥ १० ॥

पुरोधा—( सक्षोभम् ) आः किमिदमादिष्टो दिशां पर्यवष्टम्भः ।

( पुनर्नेपथ्ये कलकल )

कञ्चुकी—( आकर्ण्यावलोक्य च )

अन्योन्याघोषणोत्तालभीषणोस्फालशालिनः ।
विक्रामन्ति हरिच्चक्रमाक्रामन्तो महासुराः ॥ ११ ॥

पुरोधाः—( विलोक्य )

---

( फिर नेपथ्य मे )

अजी शाखानगरो के शासक सामन्तगण,

महाराज दैत्येश्वर की आज्ञा के साथ-साथ आप मे से कुछ लोग दिङ्मण्डल को चारो तरफ से घेर लें, कुछ लोग प्राकार से बाहर निकलती हुई हवा को भी रोक रखें, और कुछ लोग अपने सैन्य के साथ आकाश मे फैल जाय तथा कुछ लोग पाताल मे पैठ कर दैत्यराजपुरी को जड़ को चारो तरफ से घेर लें ॥ १० ॥

पुरोधा—( क्षुब्ध हो कर ) अहा, यह दिशाओ को घेरने का आदेश क्यो दिया गया है ?

( फिर नेपथ्य मे कलकल होता है )

कञ्चुकी—( सुन कर तथा देख कर )

एक दूसरे को ललकारने वाले तथा भयङ्कर उत्फाल मचाने वाले यह महासुर दिङ्मण्डल में व्याप्त होकर आक्रमण कर रहे हैं ॥ ११ ॥

पुरोधा—( देख कर )

दोःस्तम्भोद्रेकदम्भोत्कटदनुजभटास्फोटनोत्फालकाल-
व्यावल्गत्खड्गधाराततिदनुकलिताक्रान्तलोकान्तरालम् ।
सामन्ताः स्वर्गकान्ताक्रमरणरणकास्कन्दिसन्दीप्तकोप-
व्याटोपस्पन्ददृष्टस्फुरदधरतटी सङ्कटं सङ्घटन्ते ॥ १२ ॥

कञ्चुकी—( सव्यथम् ) धिग्विधेर्वैपरीत्यम्, अत्याहितम्, कुतः ?

त्रिभुवनजययात्रा संभ्रमः क्वायमद्य
क्व च निजनगरेऽपि द्रोहिणो दुर्निवाराः ।
क्व तदमरवधूटी लुण्ठनोद्यक्तमन्तः
क्व पुनरुपनिपातोऽन्तःपुरे दुर्नयस्य ॥ १३ ॥

( पुनर्नेपथ्ये )

प्रवेशिता नटव्याजात् पुरं पापैः पतत्रिभिः ।
अन्तःपुरेऽपराध्यन्ति चौरा दौरात्म्यदूषिताः ॥ १४ ॥

---

अपने बाहुबल के दम्भ से भरे दानव योद्धागण के आस्फालन से चलते हुए खड्ग समुदाय से दिगवकाश पूर्ण हो रहा है, यह सामन्तगण स्वर्गसुन्दरियों के मिलन की आकांक्षा तथा क्रोध के कारण अपने ओठ चबा रहे हैं तथा भीषण रूप में चल रहे हैं ॥ १२ ॥

कञ्चुकी—( दुःख के साथ ) धिक्कार है ब्रह्मा की विपरीतता को, बड़ा अनर्थ है, क्योंकि—

कहाँ तो आज त्रिभुवन विजय-यात्रा की तैयारी थी, और कहाँ यह अपने नगर में भी दुर्धर्ष दुश्मनों का प्रवेश हो गया है। कहाँ हम अपने हृदयों में यह अभिलाषा संजो रहे थे कि देवबालाओं का अपहरण करेंगे और कहाँ यह हो गया कि हमारे ही अन्तःपुर में दुराचार प्रारम्भ हो गया। १३ ॥

( फिर नेपथ्य में )

इन पापी पक्षियों के द्वारा नट के व्याज से नगर के भीतर लाये गये यह चौरगण दुष्टता से कन्यान्तःपुर में अपराध कर रहे हैं ॥ १४ ॥

तेऽमी महामायिनो मायाहरीभिर्महासुरीभिरन्तः पुरेऽन्विष्य निगृह्यन्ताम् । अथवा किमेतावद्भिः ( उच्चैराघोषयन् ) रे रे मायातिरोहिताःपरिचिताश्चौराः, चेतयध्वम् ,

युष्माभिर्दनुजाधिराजतनया शुद्धान्तपाटच्चरैः
प्रागेवप्रतिपादितं स्वयमिदं मृत्यामुखे जीवितम् ।
तत्किं वासरकौशिकैरिव चिरस्थेमाशयास्थीयते
स्थातारो न भवन्ति दुर्नयदशाविष्टा विनष्टायुषः ॥ १५ ॥

अपि च—

नापक्रान्तं दानवव्यूहमध्याद्युष्माकं वः कश्चिदन्यः प्रकारः ।
दूरं युष्मान् पातयिष्यन् विधाताप्यस्मद्वानेक. शस्त्रधारापथो नः ॥१६॥

पुरोधाः—( आकर्ण्य ) ( अपरतोऽवलोक्य )

आः के खल्वेते महापुरुषप्रकाण्डाः प्रकटमन्तःपुरप्रासादमारोहन्ति ?

कञ्चुकी—( विलोक्य ) उपाध्याय, नूनं त एवैते चिरात्सिक्रान्त-

---

इन मायावी चोरों को मायाहरण करने वाली हमारी महासुरियाँ खोज कर पकड़ लें । ( अथवा ) इतने से क्या होगा ? ( जोर से घोषणा करता हुआ ) अरे मायावश तिरोहित चोरगण, सम्हल जाओ ।

तुम लोगों ने दैत्यराजतनया के अन्तःपुर में डाका डालकर स्वयं अपना जीवन मौत के मुख में डाल दिया है, फिर उल्लू की तरह, छिप कर चिरकाल तक जीवित रहने की आशा कर रहे हो, उनका जीवन चिरस्थायी नहीं हो पाता है जो दुर्विनय पर उतर आते हैं ॥ १५ ॥

दानव मण्डली के बीच से तुम वध्यों के निकल भागने का कोई रास्ता नहीं है, हमारे शस्त्रों की धारा के मार्ग से तुम लोगों को अलग कर सकने में कोई ब्रह्मा समर्थ नहीं है ॥ १६ ॥

पुरोधा—( सुनकर ) ( दूसरी ओर देख कर )

अरे यह कौन महापुरुषगण खुले आम अन्तःपुर के प्रासाद पर चढ़ रहे हैं ?

कञ्चुकी—( देख कर ) उपाध्याय, निश्चय ही यह वही कन्यान्त.-

कन्यान्तः पुरवैरिणो विकत्थनमसहमाना स्वपौरुषनिर्भराः परापतन्ति।

( पुनर्नेपथ्ये कलकलानन्तरम् )

भो भो. कन्यान्त पुरप्रवेशिन, प्रसह्य गृह्यन्तामभी प्रासादवर्त्तिनः पाटच्चरा । वय पुनरखिलमेवान्त पुर पर्यवष्टभ्य तिष्ठाम. ।

कञ्चुकी—( सभयम् ) अहो महदत्याहितमापतितम्, तदावाम-प्येतस्मात् सभाविताखसञ्चारनिरावरणात् प्रदेशादपसराव. ।

( इति निष्क्रान्तौ )

विष्कम्भकः

( प्रविश्यापटीक्षेपेण वियदुत्पात नाटयन् )

भद्र —भोस्तथाहमुत्पतितो यथा हि—

सद्यो नद्यो लुप्तकल्पा विकल्पा. सत्त्वासत्त्वाभ्यां पत्तने वारणे वा ।
शैलालीयं क्षुद्रवल्मीकपाली क्षोणी क्षुद्रा जायते द्रागियत्ता ॥ १७ ॥

---

पुरवर्ती दुष्टगण वैरियो की श्लाघा को नहीं सह सकने के कारण अपने पराक्रम पर निभर हो कर निकल रहे हैं ॥

( फिर नेपथ्य मे दूसरा कलकल होता है )

भजी, कन्यान्त पुर मे प्रवश करने वाले इन चोरो को पकड लो, हम लोग सारे कन्यान्त पुर को घेरे रहते हैं ।

कञ्चुकी—( भय से ) अहो, बडा भारी अनर्थ है हम अब यहाँ स भाग चलें, क्योंकि अब यहाँ पर अस्त्र का सञ्चार होगा, जिससे बचने का आवरण नहीं है ।

[ दोनों का प्रस्थान ]

( विष्कम्भक )

( बिना पर्दा उठाये प्रवेश करके आकाश मे उडने का अभिनय करता हुआ )

भद्र—अजी, मैं इस प्रकार से उडा कि—तत्काल नदियाँ मेरी दृष्टि से ओझल हो गईं, गावों तथा गजो का होना सन्दिग्धावस्था में पड गया । यह वनमाला बहुत छोटी वल्मीक की तरह तथा पृथ्वी अतिक्षुद्र दीख रही है ॥ १७ ॥

( विपर्यस्यत्तरत्नाङ्गुलीनां वीणां वहन्महः )

( निरूप्य ) आं ज्ञातम् , सोऽयं कलहकेदारनीरदो नारदो मुनिः ।

( ततः प्रविशत्याकाशवर्त्मना नारदः )

नारदः—( साशंसम् )

चिराददृष्टदृश्यस्य दुःखसाक्षिभिरक्षिभिः ।
महाहवजानन्द निर्भरैरद्य भूयताम् ॥ १८ ॥

अहो महोत्सवोऽयमस्माकम् यदन्योन्यमन्येषां जिजीविषाविषमोऽभियोगभारः । तथाहि—

तं विद्मो विषयं वयं विवदते वीरद्वयी यत्कृते
तद्राज्यं बहुमन्महे यदुदयद्द्वैराज्यदोलायितम् ।
एतन्नः सुदिनं नवाहवरवो यत्र श्रवो मुद्गणः
सा दिक् साहसिनामपायमसिना पश्यामि यस्यामहम् ॥१९॥

भद्रः—( ससंभ्रममुपसृत्य ) भगवन्नयमहं प्रणमामि । (इति तथा करोति)

---

( गोद मे वीणा लिये हुए नारद का प्रवेश )

नारद—( आशा भरे स्वर मे ) अहा चिरकाल पर आज हमारे नयन महायुद्ध देखने के आनन्द का अवसर प्राप्त करेंगे, उनको वह आनन्द प्राप्त होगा जिसमे चिरकाल से जिन लोगो ने दुःख का साक्षात्कार नही किया है उनके दुःखो के प्रत्यक्ष होंगे ॥ १८ ॥

अहा, यह हमारे लिये महोत्सव है कि यह परस्पर जयेच्छा वालो का भयङ्कर आक्रमण हो रहा है । क्योकि—

हम उसी देश को देश समझते हैं जिसके लिये दो वीर परस्पर विवाद करते हैं, हम उसी राज्य को अच्छा राज्य समझते हैं जहाँ दो नृपो का सङ्घर्ष जारी हो । हमारे लिये वही सुदिन होता है जब नवयुद्ध का कोलाहल कानो मे पड़ता है और वही दिशा वस्तुतः दिशा है जिसमें हम बहादुरों का वध देख पाते हैं ॥ १९ ॥

भद्र—( घबड़ाया हुआ समीप आकर ) भगवन्, मैं भद्र प्रणाम करता हूं । ( प्रणाम करता है ) ।

